"यदा वा शब्दवाच्यत्वान्न व्यक्तीनामपोह्यता ।
तदाऽपोह्येत सामान्यं तस्यापोहाच्च वस्तुता" ॥
"नापोह्यत्वमभावानामभावाभाववर्जनात् ।
व्यक्तोऽपोहान्तरेऽपोहस्तस्मात् सामान्यवस्तुनः" ॥
[श्लो॰ वा॰ अपो॰ श्लो॰ ९५-९६] इति ।

अपि च, अपोहानां परस्परतो वैलक्षण्यमवैलक्षण्यं वा? तत्राद्ये पक्षे अभावस्यागोशब्दस्याभिधेयस्याभावो गोशब्दाभिधेयः, स चेत् पूर्वोक्तादभावाद् विलक्षणस्तदा भाव एव भवेत् अभावनिवृत्तिरूपत्वाद् भावस्य। न चेद् विलक्षणस्तदा गौरप्यगौः प्रसज्येत, तदवैलक्षण्येन तादात्म्यप्रतिपत्तेः । स्यादेतत् गवाश्वादिशब्दैः स्वलक्षणान्येव परस्परतो व्यावृत्तान्यपोह्यन्ते नाभावः; तेनापोह्यत्वेन वस्तुत्वप्रसङ्गापादनं नानिष्टम्, असदेतत्; यद्यपि सच्छब्दादन्येषु गवादिशब्देषु वस्तुन (नः) पर्वतादेरपोह्यता सिद्ध्यति, सच्छब्दस्य त्वभावाख्यादपोह्यान्नान्यदपोह्यमस्ति असद्व्यवच्छेदेन सच्छब्दस्य प्रवृत्तत्वात्; ततश्च पूर्ववदभावाभाववर्जनाद् असतोऽपोहे वस्तुत्वमेव स्याद् इत्यपोहवादिनोऽभ्युपगमविरुद्धाऽसद्वस्तुत्वप्रसक्तिः ।

अथास्त्वभावस्यापि वस्तुत्वम्, न, अभावस्यापि सिं(स्याऽसि)द्धौ कस्यचिद् भावस्यैवासिद्धेः, अभावव्यवच्छेदेन तस्य भवन्मतेन स्थितलक्षणत्वात्। अभावस्य वाऽपोह्यत्वे सति वस्तुत्वप्रसङ्गेन स्वरूपासिद्धेरसत्त्वमपि न सिद्ध्यति, तस्य सत्त्वव्यवच्छेदरूपत्वात्, सत्त्वस्य च यथोक्तेन प्रकारेणायोगात्। न चात्र–

"अपोह्यैः स वहिःसंस्थितैर्भिद्यते"

इत्यादौ

"अवस्तुत्वादपोहानां नैव भेदः"

इत्यादौ च 'न खल्वपोह्यभेदादाधारभेदाद् वाऽपोहानां भेदः, अपि त्वनादिकालप्रवृत्तविचित्रवित-

---

१ क्रमेण तत्त्वस॰ का॰ ९५५-९५६ पृ॰ ३०३-३०४।

२ "अभावस्य च योऽभाव स चेत् तस्माद् विलक्षण । भाव एव भवेन्नो चेद् गौरगौस्ते प्रसज्यते" ॥
श्लो॰ वा॰ अपो॰ श्लो॰ ९७। तत्त्वस॰ का॰ ९५७ पृ॰ ३०४।

३ "अभावस्य अगोशब्दाभिधेयस्याभाव"–तत्त्वस॰ पञ्जि॰ ३०४ पं॰ २१। "पक्षे भावस्याऽगोशब्दाभिधेयस्याभाव"–प्रमेयक॰ पृ॰ १२७ द्वि॰ पं॰ ८।

४ "नाभावा', तेनापोह्यत्वेन तेषां वस्तुत्वप्रसङ्गापादनं नानिष्टम्"–तत्त्वस॰ पञ्जि॰ पृ॰ ३०४ पं॰ २६।

५ "यद्यप्यन्येषु शब्देषु वस्तुन स्यादपोह्यता । सच्छब्दस्य त्वभावाख्यान्नापोह्य भिन्नमिष्यते" ॥
श्लो॰ वा॰ अपो॰ श्लो॰ ९८। तत्त्वस॰ का॰ ९५८ पृ॰ ३०४।

६ वस्तुनष्पर्वतादे–भा॰ मा॰। वस्तुन शर्वतादे–वा॰ बा॰। "वस्तुन॰ पर्वतादे॰"–तत्त्वस॰ पञ्जि॰ पृ॰ ३०५ पं॰ ७। ७–च्छ्दासत् वस्तु–आ॰ हा॰ वि॰। ८–थास्तु भा–वा॰ बा॰।
"तत्राऽसतोऽपि भावत्वमिति क्लेशो महान् भवेत् । तदसिद्धौ न सत्ताऽस्ति न चाऽसत्ता प्रसिध्यति" ॥
श्लो॰ वा॰ अपो॰ श्लो॰ ९९। तत्त्वस॰ का॰ ९५९ पृ॰ ३०५।

९–स्तुत्वम् भा–भा॰ मा॰ विना। १० "'तदसिद्धौ' तस्याऽभावस्यासिद्धौ"–तत्त्वस॰ पञ्जि॰ पृ॰ ३०५ पं॰ १०। ११–स्य भावापोह्यत्वे आ॰। १२–कारेण यो–वा॰ बा॰ आ॰। १३ न चात्रापोह्यैस्सद् वहिःसंस्थितैर्भिद्यते स्यादावचस्तुत्वाद्पोहानाम् भा॰ मा॰। न चात्र पोह्येऽसवहिसंस्थितैर्भिद्यते स्यादानवतः वस्तुत्वादपोहानाम् मा॰। न चात्रापोह्यैऽस वहि संस्थितैर्भिद्यते स्यादानवतः वस्तुत्वादपोहानाम् पु॰ भा॰ डे॰। न चात्रापोह्यैसद्भिः संस्थितैर्भिद्यतेयादवः वस्तुत्वादपोहीनां नैवे भेदः वा॰ बा॰। न चात्रपोह्येऽस वहि संस्थितै भिद्यतेत्यादानवनः वस्तुत्वादपोहानाम् आ॰। १४ पृ॰ १८९ पं॰ ३ तथा २५। १५ पृ॰ १८८ पं॰ १९ तथा ४०। १६ "यत् पूर्वमुक्तम्–'अपोह्यैः स वहिः संस्थैर्भिद्येत' इत्यादि, यच्चोक्तम्–'अवस्तुत्वादपोहानां नैव भेद' इत्यादि, तत्र केचिद् बौद्धाः परिहारमाहुः–न खल्वपोह्यभेदा(दा)धारभेदाद् वा अपोहानां भेद" इत्यादि मतमन्तरेण तत्त्वस॰ पञ्जि॰ पृ॰ ३०५ पं॰ १४-१९।

थार्थविकल्पवासनाभेदान्वयैस्तत्त्वतो [1]'निर्विषयैरप्यभिन्नविषयालम्बिभिर्भिन्नैरिव प्रत्ययैर्भिन्ने[2]ष्वर्थेषु वाह्येषु भिन्ना इवार्थात्मान इवास्वभावा अप्यपोहाः[3] समारोप्यन्ते, ते[4] चैवं तथा तैः समारोपिता भिन्नाः सन्तश्च प्रतिभासन्ते येन वासनाभेदाद् भेदः सद्रूपता वाऽपोहानां भविष्यति' इत्ययं परिहारो वक्तुं युक्तः[5]; यतो न ह्यवस्तुनि वासना सम्भवति, वासनाहेतोर्निर्विषयप्रत्ययस्यायोगात्; तदभावाद् वितथार्थानां विकल्पानाम[6]सम्भवात् आलम्बनभूते वस्तुन्यसति निर्विषयज्ञाना[7]योगेन वासनाधायकविज्ञाना[8]ऽभावतो न वासना; ततश्च वासनाऽभावात् कुतो वासनाकृतोऽपोहानां भेदः सद्रूपता वा? अतो वाच्याभिमतापोहाभावः।

तथा, वाचकाभिमतस्यापि तस्याभाव एव, तथापि[9] शब्दानां[10] भिन्नसामान्यवाचिनां विशेषवाचिनां च परस्परतो भेदो वासनाभेदनिमित्तो वा स्यात् वाच्यापोहभेदनिमित्तो वा? ननु प्रत्यक्षत एव शब्दानां कारणभेदाद् विरुद्धधर्माध्यासाच्च भेदः प्रसिद्ध एवेति प्रश्नानुपपत्तिः, असदेतत्, यतो वाचकं शब्दमङ्गीकृत्य प्रश्नः, न च [11]श्रोत्रज्ञानावसेयः स्वलक्षणात्मा शब्दो[12] वाचकः, सङ्केतकालानुभूतस्य व्यवहारकाले चिरविनष्टत्वात् तस्य न तेन व्यवहार इति न स्वलक्षणस्य वाचकत्वं भवदभिप्रायेण, अविवादश्चात्र। यथोक्तम्—

"नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते।
तस्य पूर्वमदृष्टत्वात् सामा[13]न्यं तूपदेक्ष्यते[14]"॥[ ] इति।

तस्माद् वाचकं शब्दमधिकृत्य प्रश्नकरणा[15]ददोषः।

"तत्र शब्दान्तरापोहे सामान्ये परिकल्पिते।
तथैवावस्तुरूपत्वाच्छब्दभेदो न कल्प्यते"[16]॥ [श्लो० वा०अपो०श्लो० १०४]

यथा पूर्वो[17]क्तेन विधिना 'संसृष्टैकत्वनानात्व'–इत्यादिना वाच्यापोहानां परस्परतो भेदो न घटते तथा शब्दापोहानामपि नीरूपत्वान्नासौ युक्तः, यथा[18] च वाचकानां परस्परतो भेदो न सङ्गच्छते एवं वाच्यवाचकयोरपि मिथो भेदोऽनुपपन्नः, निःस्वभावत्वात्। न चापोह्यभेदा[19]द् भेदो भविष्यति, 'न [20]विशेषः स्वतस्तस्य' इत्या[21]दिना प्रतिविहितत्वात्। तदेवं प्रतिज्ञायाः प्रतीत्य[22]भ्युपेतबाधा व्यवस्थिता।

साम्प्रतं वाच्यवाचकत्वाभावप्रसङ्गापादनादभ्युपेतबाधादिदोषं प्रतिपिपादयिषुः प्रमाणयति— [23]"ये अवस्तुनी न तयोर्गम्यगमकत्वमस्ति, यथा खपुष्प–शशशृङ्गयोः, अवस्तुनी च वाच्यवाचकापोहौ

---

१ निर्विषयैरपि भेदान्न विषयालम्बिभिन्नप्रत्ययैर्भिन्नेष्ठवाह्येषु भिन्ना इवार्थात्मान–वा० वा०।

२–न्नेष्वर्थेष्ववाह्येषु आ० हा० वि०। ३–वा अपोहाः आ० हा० वि० का०। ४ ते च तथा मा०। ते चैव तथा वा० वा०।

५ "न चापि वासनाभेदाद् भेदः सद्रूपताऽपि वा। अपोहाना प्रकल्प्येत न ह्यवस्तुनि वासना"॥
श्लो० वा० अपो० श्लो० १००। तत्त्वस० का० ९६० पृ० ३०५।

६–मसंभव एवात आ—भा० मा०। ७–ज्ञानयो–भा० मा०। ८–नामावोतो–वि०। ९ "तथाहि"–प्रमेयक० पृ० १२७ द्वि० पं० १०।

१० "गवादि' शब्दभेदोऽपि तन्निमित्तो न लभ्यते। न ह्यसाधारणः शब्दो वाचकः प्रागदृष्टितः"॥
श्लो० वा० अपो० श्लो० १०२। तत्त्वस० का० ९६१ पृ० ३०६।

११ श्रोतृ–आ० हा० वि०। १२ शब्दोऽवाच–भा० मा०। १३–न्यं रूपदेष्यते आ० हा० वा० वा०।–न्यं रूपं नेष्यते वि०। "सामान्यं तूपदेक्ष्यते"–तत्त्वसं० पञ्जि० पृ० ३०६ पं० १७। द्वादशारनय० लि० प्र० पृ० २८४ द्वि० पं० ८ आ०। "सामान्यं तूपदिश्यते"–प्रमेयक० पृ० १२८ प्र० पं० ३। १४ तत्त्वसं० पञ्जि० पृ० ३०६ पं० १६। १५–प्रव्याकरणा–आ०। १६ तत्त्वस० का० ९६२ पृ० ३०६। १७ पृ० १८८ पं० २० तथा ४०।

१८ "वाचकानां यथा चैवं वाच्य–वाचकयोर्मिथः। न चाप्यपोह्यभेदेन भेदोऽस्तीत्युपपादितम्"॥
श्लो० वा० अपो० श्लो० १०५। तत्त्वस० का० ९६३ पृ० ३०६।

१९–दादभेदो आ० हा० वि०। २० विशेषः स्ततस्त–मा०। २१ पृ० १८९ पं० १ तथा २२। २२–त्यभ्युपेत्य वा–भा० मा०।

२३ "न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः। भवत्पक्षे यथा लोके खपुष्प–शशशृङ्गयोः"॥
श्लो० वा० अपो० श्लो० १०८। तत्त्वसं० का० ९६४ पृ० ३०६।

भवतामिति व्यापकविरुद्धोपलब्धिः। नेनु च मेघाभावाद् वृष्ट्यभावप्रतीतेर्हेतोरनैकान्तिकता, अयुक्तमेतत्; यस्मात् तद्विविक्ताकाशाऽऽलोकात्मकं च वस्तु मत्पक्षेऽत्रापि प्रयोगो(गे)ऽस्त्येव, अभावस्य वस्तुत्वप्रतिपादनात्। भवत्पक्षे तु न केवलमपोहयोर्विवादास्पदीभूतयोर्गम्यगमकत्वं न युक्तम् अपि त्वेतदपि वृष्टिमेघाभावयोर्गम्यगमकत्वमयुक्तमेव। किञ्च, यदेतद् भवद्भिरन्वयोपसर्जनयोर्व्यतिरेकप्रधानयोः स्वविषयप्रतिपादकत्वं शब्द-लिङ्गयोर्वर्ण्यते, यच्च—

"अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात्।
श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता"॥ [ ]

इत्यादि वर्णितम् तदप्यपोहाभ्युपगमेऽसङ्गतम्, यतः—

"विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते।
न भवेद् व्यतिरेकोऽपि तस्य तत्पूर्वको ह्यसौ" ॥ [ श्लो० वा० अपो० श्लो० ११० ]

विधिनिवृत्तिलक्षणत्वाद् व्यतिरेकस्येति भावः।

किञ्च, नीलोत्पलादिशब्दानां विशेषणविशेष्यभावः सामानाधिकरण्यं च यदेतल्लोकप्रतीतं तस्यापह्नवोऽपोहवादिनः प्रसक्तः। यच्चेदं विशेषणविशेष्यभाव-सामानाधिकरण्यसमर्थनार्थमुच्यते-

"अपोह्यभेदाद् भिन्नार्थो स्वार्थभेदगतौ जडौ।
एकत्वाभिन्नकार्यत्वाद् विशेषणविशेष्यता" ॥ [ ]
"तन्मात्राकाङ्क्षणाद् भेदः स्वसामान्येन नोज्झितः।
नोपात्तः संशयोत्पत्तेः सैव चैकार्थता तयोः" ॥ [ ] इति,

तदप्यनुपपन्नम्; यतः परस्परं व्यवच्छेद्या(द्य)व्यवच्छेदकभावो विशेषणविशेष्यभावः, स च वाह्य (वाक्य) एव व्यवस्थाप्यते यथा 'नीलो(नीलमु)त्पलम्' इति। व्यधिकरणयोरपि यथा 'राज्ञः पुरुषः' इत्यादौ। भिन्ननिमित्तप्रयुक्तयोस्तु शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्; तच्च 'नीलोत्पलम्' इत्यादौ वृत्तावेव व्यवस्थाप्यते। न च नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु तत्सिद्धिः, शबलार्थाभिधायित्वं च तेषाम्—

"न हि तत् केवलं नीलं न च केवलमुत्पलम्।
समुदायाभिधेयत्वात्" [ ]

इत्यादिना प्रतिपादितम्। यतः अनीलत्वव्युदासेऽनुत्पलव्युदासो नास्ति, नाप्यनुत्पलप्रच्युता-

---

१ "वृष्टिमेघासतोर्दृष्ट्या यथाऽनैकान्तिकं वदेत्। वस्त्वेवाऽत्रापि मत्पक्षे भवत्पक्षेऽप्यदः कुतः" ॥
श्लो० वा० अपो० श्लो० १०९। तत्त्वस० का० ९६५ पृ० ३०७।

२ "प्रयोगे" –प्रमेयक० पृ० १२८ प्र० पं० ५। "मत्पक्षेऽत्रापि वृष्टिमेघाभावप्रयोगे"–तत्त्वस० पञ्जि० पृ० ३०७ पं० १०।

३ यथा भा०। ४ अदृष्टेरन्यशब्दार्थस्वार्थ–हा०। अदृष्टैरन्यशब्दार्थे का०। अदृष्टैरन्यशब्दार्थे स्वा–वि०। अदृष्टेऽप्यन्यशब्दार्थस्वा–वा० बा०। ५ श्रुते संवन्धसौकार्ये आ० हा० वि० का०। श्रुतोः संवन्धसौकर्यम् वा० बा०। ६ तत्त्वस० पञ्जि० पृ० ३०७ पं० १७। ७–रूपस्य श–वा० बा०। ८ तत्त्वस० का० ९६६ पृ० ३०७। ९ भिन्नार्थाः हा० वि०। भिन्नार्थोऽस्वा–आ०। १० एकत्राभि–आ० हा० वि०।

११ "अपोह्यभेदाद् भिन्नार्थो स्वार्थभेदगतौ जडौ। एकत्राभिन्नकार्यत्वाद् विशेषणविशेष्यका" ॥
तत्त्वस० पञ्जि० पृ० ३०७ पं० २५।

१२–न चोज्झितः वि०। १३–पात्तसं–वा० बा०। १४–शयोत्पत्तिः वि०। १५–च वैका–आ०।
१६ "साम्ये चैकार्थता तयो"–तत्त्वस० पञ्जि० पृ० ३०७ पं० २७। श्लो० वा० पार्थ० व्या० पृ० ६०८ पं० २४।

१७ "अपोहमात्रवाच्यत्वं यदि चाऽभ्युपगम्यते। नीलोत्पलादिशब्देषु शबलार्थाभिधायिषु" ॥
"विशेषणविशेष्यत्व–सामानाधिकरण्ययोः। न सिद्धिर्न ह्यनीलत्वव्युदासेऽनुत्पलच्युतिः" ॥
"नापि तत्रेतरस्तस्मान्न विशेष्य–विशेषणे। शब्दयोर्नापि ते स्यातामभिधेयाऽनपेक्षयोः" ॥
श्लो० वा० अपो० श्लो० ११५–११६–११७। तत्त्वस० का० ९६७–९६८–९६९ पृ० ३०८।

१८–स्परं व्यवच्छेदकभा–भा० मा० विना। १९ "स च वाक्य एव"–तत्त्वस० पञ्जि० पृ० ३०८ पं० ९।
२० "यथा नीलमुत्पलमिति"–तत्त्वस० पञ्जि० पृ० ३०८ पं० १०। २१ तत्त्वस० पञ्जि० ३०८ पं० १४। शास्त्रवा० स्याद्वाद० पृ० ४०६ प्र० पं० ३। २२–नीलव्यु–आ०।

वनीलव्युदास इति नानयोः परस्परमाधाराधेयसम्बन्धोऽस्ति नीलरूप(नीरूप)[1]त्वात्; न चासति सम्बन्धे विशेषणविशेष्यभावो युक्तः अतिप्रसङ्गात्, अतो युष्मन्मतेनाभाववाचित्वाच्छबलार्थाभिधायित्वासम्भवाच्च विशेषणविशेष्यभावो युक्तः। अभिधेयद्वारेणैव हि तदभिधायिनोः शब्दयोर्विशेषणविशेष्यभाव उपचर्यते, अभिधेये च तस्यासम्भवेऽभिधानेऽपि कुतस्तदारोपः?

[2]सामानाधिकरण्यमपि नीलोत्पलशब्दयोर्न सम्भवति, तद्वाच्ययोरनीलानुत्पलव्यवच्छेदलक्षणयोरपोह्योर्भिन्नत्वात्। तच्च भवद्भिरेव

'अपोह्यभेदाद् भिन्नार्थौ'

इत्य[3]भिधानादवसीयते। प्रयोगः–न नीलोत्पलादिशब्दाः समानाधिकरणव्यवहारविषयाः, भिन्नविषयत्वात्, घटादिशब्दवत्। न च यत्रैव ह्यर्थेऽनुत्पलव्युदासो वर्त्तते तत्रैवानीलव्युदासोऽपीति नीलोत्पलशब्दवाच्ययोरपोह्योरेकस्मिन्नर्थे वृत्तेः अर्थद्वारकं सामानाधिकरण्यं शब्दयोरपीति वक्तुं[4] युक्तम्, अपोहयोर्नी[5]रूपत्वेन क्वचिदवस्थानासम्भवतो वास्तवाधेयतायोगाद्[6] वन्ध्यासुतस्येव।

भवतु वा नीलोत्पलादिष्वर्थेषु तयोराधेयता तथापि सा विद्यमानापि न शब्दैः प्रतिपाद्यते, [7]यतस्तदेवासाधारणत्वान्नीलोत्पलादि वस्तु न शब्दगम्यम्, स्वलक्षणस्य सर्वविकल्पातीतत्वात् तदप्रतिपत्तौ च तदधिकरणयोरपोह्योस्तदाधेयता कथं ग्रहीतुं शक्या धर्मिग्रहणनान्तरीयकत्वाद् धर्मग्रहणस्य? न चासाधारणवस्तुव्यतिरेकेण तयोरन्यदधिकरणं सम्भवति भवदभिप्रायेण। न चाप्रतीयमानं सदपि सामानाधिकरण्यव्यवहाराङ्गम् अतिप्रसङ्गात्। न च व्यावृत्तिमद् वस्तु शब्दवाच्यम्—यतो व्यावृत्तिद्वयोपाधिकयोः शब्दयोरेकस्मिन्नपोहवति वस्तुनि वृत्तेः सामानाधिकरण्यं भवेत्—[8]परतन्त्रत्वाद् नीलादिशब्दस्येतरभेदाना[9]क्षेपकत्वात्[10], स हि व्यावृत्त्युपसर्जनं तद्वन्तमर्थमाह न साक्षात् ततश्च साक्षादनभिधानात् तद्गतभेदाक्षेपो न सम्भवति, यथा–मधुरशब्देन शुक्लादेः। यद्यपि शुक्लादीनां मधुरादिभेदत्वमस्ति तथापि शब्दस्य साक्षादभिहितार्थगतस्यैव भेदस्याक्षेपे सामर्थ्यम् न तु पारतन्त्र्येणाभिहितार्थगतस्य, ततश्च नीलादिशब्देन तद्गतभेदानाक्षेपात् उत्पलादीनामतद्भेदत्वं स्यात्; [11]अतद्भेदत्वे च न सामान्याधिकरण्यम्; तेन जातिमन्मात्रपक्षे यो दोषः प्रतिपादितो भवता "तद्वतो न वाचकः शब्दः, अस्वतन्त्रत्वात्[12]" [ ] इति स व्यावृत्तिमन्मात्रपक्षेऽपि तुल्यः। तथाहि–जातिमन्मात्रे शब्दार्थे सच्छब्दो जातिस्वरूपोपसर्जनं द्रव्यमाह न साक्षादिति तद्गतघटादिभेदानाक्षेपात् अतद्भेदत्वे सामानाधिकरण्याभावप्रसङ्ग उक्तः; स व्यावृत्तिमन्मात्रपक्षेऽपि समानः—तत्रापि हि सच्छब्दो व्यावृत्त्युपसर्जनं द्रव्यमाह न साक्षादिति तद्गतभेदानाक्षेपोऽत्रापि समान एव, को ह्यत्र विशेषः [13]जातिव्या(र्व्या)वृत्तिर्जातिमद्व्या(र्जातिमान् व्या)वृत्तिमानिति।

न[14] च लिङ्ग सङ्ख्या-क्रिया-कालादिभिः सम्बन्धोऽपोहस्यावस्तुत्वाद् युक्तः, एषां वस्तुधर्मत्वात्। न च लिङ्गादिविविक्तः पदार्थः शक्यः शब्देनाभिधातुम्, अतः प्रतीतिबाधाप्रसङ्गः प्रतिज्ञायाः।

---

१ "नीरूपत्वात्"–तत्त्वस० पञ्जि० पृ० ३०८ पं० १८। वि० प्रतावपि तथैव संशोधितं दृश्यते।

२ "सामानाधिकरण्यं च न भिन्नत्वादपोह्योः। अर्थतश्चैतदिष्येत कीदृश्याधेयता तयोः" ॥

मी० श्लो० वा० अपो० श्लो० ११८। तत्त्वस० का० ९७० पृ० ३०८।

३ भिन्नार्थैत्यभि–भां० मां० विना। ४ पृ० ११६ पं० १४। ५–नीलरूप–वा० बा० विना। ६–गाद्वस्तुतस्यैव–भा० मा० वा० बा० विना।

७ "न चासाधारणं वस्तु गम्यतेऽन्यच्च नास्ति ते। अगम्यमानमैकार्थ्यं शब्दयोः क्वोपयुज्यते" ॥

श्लो० वा० अपो० श्लो० ११९। तत्त्वस० का० ९७१ पृ० ३०९।

८ "अथान्यापोहवद्वस्तु वाच्यमित्यभिधीयते। तत्रापि परतन्त्रत्वाद् व्याप्तिः शब्देन दुर्लभा" ॥

श्लो० वा० अपो० श्लो० १२०। तत्त्वस० का० ९७२ पृ० ३०९।

९–दानापेक्षक–भां० मां०। १०–स्यात् न हि वा० बा०। ११ "अतद्भेदत्वे च सामानाधिकरण्यं न प्राप्नोति"–तत्त्वस० पञ्जि० पृ० ३१० पं० ६। १२ तत्त्वस० पञ्जि० पृ० ३१० पं० ७। "जातिमदभिधानेऽपि 'तद्वतो नाऽस्वतन्त्रत्वात्' इत्यादिना सामानाधिकरण्यानुपपत्तिर्भिक्षुणा दर्शिता"–श्लो० वा० पार्थ० व्या० पृ० ५९८ पं० ७।

१३ जातिर्व्यावृत्तिजातिमद्व्यावृत्तिमानिति वि०। जातिमद्व्यावृत्तिमानिति आ०। जातिमान्व्यामावृत्तिमानिति वा० बा०। "को ह्यत्र विशेषः जातिर्व्यावृत्तिर्जातिमान् व्यावृत्तिमानिति"–तत्त्वस० पञ्जि० पृ० ३१० पं० १२।

१४ "लिङ्ग–सङ्ख्यादिसंबन्धो न चाऽपोहस्य विद्यते। व्यक्तेरव्यपदेश्यत्वात् तद्द्वारेणापि नास्त्यसौ" ॥

श्लो० वा० अपो० श्लो० १३५। तत्त्वस० का० ९७३ पृ० ३१०।

न च व्यावृत्त्याधारभूताया व्यक्तेर्वस्तुत्वाल्लिङ्गादिसम्बन्धात् तद्द्वारेणापोहस्याप्यसौ व्यवस्थाप्यः, व्यक्तेर्निर्विकल्पकज्ञानविषयत्वाल्लिङ्ग-सङ्ख्यादिसम्बन्धेन व्यपदेष्टुमशक्यत्वात् अपोहस्य तद्द्वारेण तद्व्यवस्थाऽसिद्धेः।

अव्यापित्वं चापोहशब्दार्थव्यवस्थायाः, 'पचति' इत्यादिक्रियाशब्देष्वन्यव्यवच्छेदाप्रतिपत्तेः। यथा हि घटादिशब्देषु निष्पन्नरूपं पटादिकं निषेध्यमस्ति न तथा 'पचति' इत्यादिषु, प्रतियोगिनो निष्पन्नस्य कस्यचिदप्रतीतेः। अथ मा भूत् पर्युदासरूपं निषेध्यम्, 'न पचति' इत्येवमादि प्रसज्यरूपं 'पचति' इत्यादेर्निषेध्यं भविष्यति, असदेतत्; 'तन्न (न न) पचति' इत्येवमुच्यमाने प्रसज्यप्रतिषेधस्य निषेध एवोक्तः स्यात्, ततश्च प्रतिषेधद्वयस्य विधिविषयत्वाद् विधिरेव शब्दार्थः प्रसक्तः। किञ्च, 'पचति' इत्यादौ साध्यत्वं प्रतीयते, यस्यां हि क्रियायां केचिदवयवा निष्पन्नाः केचिदनिष्पन्नाः सा पूर्वापरीभूतावयवा क्रिया साध्यत्वप्रत्ययविषयः, तथा, 'अभूत्' 'भविष्यति' इत्यादौ भूतादिकालविशेषप्रतीतिरस्ति, न चापोहस्य साध्यत्वादिसम्भवः निष्पन्नत्वादभावैकरसत्वेन; तस्मादपोहशब्दार्थपक्षे साध्यत्वप्रत्ययो भूतादिप्रत्ययश्च निर्निमित्तः प्राप्नोतीति प्रतीतिबाधा। न च विध्यादौ चान्यापोहप्रतिपत्तिरस्ति, पर्युदासरूपस्य निषेध्यस्य तत्राभावात्। 'न न पचति देवदत्तः' इत्यादौ च नञा(ञो)ऽपरेण नञा योगे नैवापोहः, प्रतिषेधद्वयेन विधेरेव संस्पर्शात्। अपि च, चादीनां निपातोपसर्गकर्मप्रवचनीयानां पदत्वमिष्टम्, न चैषां नञा सम्बन्धोऽस्ति असम्बन्धवचनत्वात्। तथाहि—यथा हि घटादिशब्दानाम् 'अघटः' इत्यादौ नञा सम्बन्धेऽर्थान्तरस्य पटादेः परिग्रहात् तद्व्यवच्छेदेन नञा रहितस्य घटशब्दस्यार्थोऽवकल्पते न तथा चादीनां नञा सम्बन्धोऽस्ति, न चासम्बध्यमानस्य नञाऽपोहनं युक्तम्, अतश्चादिष्वपोहाभावः। अपि च, कल्माषवर्णवच्छबलैकरूपो वाक्यार्थ इति नान्यनिवृत्तिस्तत्त्वेन व्यपदेष्टुं शक्या, निष्पन्नरूपस्य प्रतियोगिनोऽप्रतीतेः। यो तु 'चैत्र! गामानय' इत्यादावचैत्रादिव्यवच्छेदरूपाऽन्यनिवृत्तिरवयवपरिग्रहेण वर्ण्यते सा पदार्थ एव स्यात् न वाक्यार्थः, तस्यावयवस्येत्थं विवेक्तुमशक्यत्वादित्यव्यापिनी शब्दार्थव्यवस्था।

---

१–वृत्त्याधारभूतायां वा० बा० आ० हा० वि०।

२ "आख्यातेषु च नान्यस्य निवृत्तिः सम्प्रतीयते। न पर्युदासरूपं हि निषेध्यं तत्र विद्यते" ॥

श्लो० वा० अपो० श्लो० १३९। तत्त्वसं० का० ९७४ पृ० ३१०।

३ "प्रसज्यरूपं 'पचति' इत्यादेर्निषेध्यं भविष्यतीत्याह—'न न पचति' इत्येवमुच्यमाने"–तत्त्वसं० पञ्जि० पृ० ३११ पं० ४–१०।

४ "न नेति ह्युच्यमानेऽपि निषेधस्य निषेधनम्। पचतीत्यनिषिद्धं तु स्वरूपेणावतिष्ठते" ॥

श्लो० वा० अपो० श्लो० १४०। तत्त्वसं० का० ९७५ पृ० ३११।

५ "साध्यत्वप्रत्ययश्चात्र तथा भूतादिरूपधम्। निष्पन्नत्वादपोहस्य निर्निमित्तं प्रसज्यते" ॥

श्लो० वा० अपो० श्लो० १४१। तत्त्वसं० का० ९७६ पृ० ३११।

६ "यस्यां क्रियायां"–तत्त्वसं० पञ्जि० पृ० ३११ पं० १३।

७ "विध्यादावर्थराशौ च नान्यापोहनिदर्शनम्। नञश्चापि नञा युक्तादपोहः कीदृशो भवेत्" ॥

श्लो० वा० अपो० श्लो० १४२। तत्त्वसं० का० ९७७ पृ० ३११।

८ "आदिशब्देन निमन्त्रणाऽऽमन्त्रणादीनां ग्रहणम्"–तत्त्वसं० पञ्जि० पृ० ३११ पं० २६। "निमन्त्रणादीनां विभक्त्यर्थानां च कर्मादीनामादिशब्देन ग्रहणमिति"–श्लो० वा० पार्थ० व्या० पृ० ६०५ पं० ८। ९ निषेधस्य भा०। १० "नञोऽपरेण नञा"–तत्त्वसं० पञ्जि० पृ० ३११ पं० २८। शास्त्रवा० स्याद्वादक० पृ० ४०७ द्वि० पं० ९। ११–न विधिरेव वा० विना०। १२ असंबद्धव–भा० मा०। "असत्त्ववचनत्वात्"–तत्त्वसं० पञ्जि० पृ० ३१२ पं० ३। शास्त्रवा० स्याद्वादक० पृ० ४०७ द्वि० प० १४। १३–दे नञा भा० मा० विना। १४–स्यार्थो विकल्प्यते भा० मा०।

१५ "चादीनामपि नञ्योगो नैवास्तीत्यनपोहनम्। वाक्यार्थोऽन्यनिवृत्तिश्च व्यपदेष्टुं न शक्यते" ॥

श्लो० वा० अपो० श्लो० १४३। तत्त्वसं० का० ९७८ पृ० ३११।

१६ "न तथा चादीनाम् 'न च' इत्यादिना"–तत्त्वसं० पञ्जि० पृ० ३१२ पं० ६। १७ चासंबध्यमान–वा० बा०। १८ "किञ्च, वाक्यार्थं कल्माषवर्णवच्छबलैकरूपमिष्यते"–तत्त्वसं० पञ्जि० पृ० ३१२ पं० ७। शास्त्रवा० स्याद्वादक० पृ० ४०८ प्र० प० ३। १९ यत्तु भा० मा०। शास्त्रवा० स्याद्वादक० पृ० ४०८ प्र० पं० ३। २० "तस्यानवयवस्येत्थं विवेक्तुमशक्यत्वात्"–तत्त्वसं० पञ्जि० पृ० ३१२ पं० १०।

किञ्च, '[1]न अन्यापोहः अनन्यापोहः' इत्यादौ शब्दे विधिरूपादन्यद् वाच्यं नोपलभ्यते, प्रतिषेधद्वयेन विधेरेवावसायात्। अत्र च[2] 'नञ्श्चापि नञा योगे' इत्यनेनार्थस्य गतत्वेऽपि 'अन्यापोहः शब्दार्थः' इत्येवंवादिनां स्ववचनेनैव विधिरिष्ट इति ज्ञापनार्थं पुनरुक्तम्। तथाहि—[3]अनन्यापोहशब्दस्यान्यापोहः शब्दार्थो व्यवच्छेद्यः, स च विधेर्नान्यो लक्ष्यते। [4]ये च प्रमेय-ज्ञेयाऽभिधेयादयः शब्दास्तेषां न किञ्चिदपोह्यमस्ति, सर्वस्यैव प्रमेयादिस्वभावत्वात्। तथाहि—यन्नाम किञ्चिद् व्यवच्छेद्यमेषां कल्प्यते तत् सर्वं व्यवच्छेद्याकारेणालम्ब्यमानं ज्ञेयादिस्वभावमेवावतिष्ठते, न ह्यविषयीकृतं व्यवच्छेत्तुं शक्यम्; अतोऽपोह्याभावादव्या[5]पिनी व्यवस्था।

ननु हेतु[6]मुखे निर्दिष्टम् "अज्ञेयं कल्पितं कृत्वा तद्व्यवच्छेदेन ज्ञेयेऽनुमा[7]नम्" [ हेतु० ] इति तत् कथमव्यापित्वं शब्दार्थव्यवस्थायाः, नैतत्; [8]यतो यदि ज्ञेयमप्यज्ञेयत्वेनापोह्यमस्य कल्प्यते[9] तदा वरं वस्त्वेव विधिरू[10]पं शब्दार्थत्वेन कल्पितं भवेत् यदध्यवसीयते लोकेन; एवं ह्यदृष्टाध्यारोपो दृष्टापलापश्च न कृतः स्यात्।

## [ विकल्पप्रतिबिम्बार्थवादिमतमुल्लिख्य तन्निरसनम् ]

ये त्वाहुः—"विकल्पप्रतिबिम्बमेव सर्वशब्दानामर्थः, तदेवं[11] चाभिधीयते व्यवच्छिद्यत इति च[12]" [ ] तेऽपि न युक्तकारिणः। [13]निराकारा बुद्धिः आकारवान् बाह्योऽर्थः—

"स बहिर्देशसम्बन्धो विस्पष्टमुपलभ्यते" [ ]

इत्या[14]दिना ज्ञानाकारस्य निषिद्धत्वात् आन्तरस्य बुद्ध्यारूढस्याकारस्या[15]सत्त्वात् तदवसायकत्वं शब्दानामयुक्तम्; अत एव तस्यापोह्यत्वमप्यनुपपन्नम्।

ये च[16] 'एवम्' 'इत्थम्' इत्यादयः शब्दास्तेषामपि न किञ्चिदपोह्यम्, प्रतियोगिनः पर्युदासरूपस्य कस्यचिदभावात्। [17]अथ 'नैवम्' इत्यादिप्रसज्यरूपं प्रतिषेध्यमत्रापि भविष्यति, न; उ[18]क्तोत्तरत्वात्।

"न नैवमिति निर्देशे निषेधस्य निषेधनम्।
एवमित्यनिषेध्यं तु स्वरूपेणैव तिष्ठति॥" [ ]

इति न्या[19]यात्।

---

१ "अनन्यापोहशब्दादौ वाच्यं न च निरूप्यते। प्रमेय-ज्ञेयशब्दादेरपोह्यं कुत एव तु" ॥
श्लो० वा० अपो० श्लो० १४४। तत्त्वसं० का० ९७९ पृ० ३११।

२ नान्यापोह इत्यादौ वा० बा०। प्रमेयक० पृ० १२८ प्र० पं० ८। शास्त्रवा० स्याद्वादक० पृ० ४०८ प्र० पं० ५। ३ अनन्यापोहः शब्दार्थो व्यवच्छेद्यः आ०। "अन्यापोहशब्दस्य अनन्यापोहशब्दार्थो व्यवच्छेद्य"—तत्त्वसं० पञ्जि० पृ० ३१२ पं० १६। ४ प्रमेयक० पृ० १२६ प्र० पं० ५। शास्त्रवा० स्याद्वादक० पृ० ४०८ प्र० पं० ७। ५ "अव्यापिन्यपोहव्यवस्था"—शास्त्रवा० स्याद्वादक० पृ० ४०८ प्र० पं० ७। ६–तुमुखेन नि–कां०। हेतुमुखनामा ग्रन्थः। ७ "यत्तु अत्र दिङ्नागेनोक्तम्—"अज्ञेयं कल्पितं कृत्वा ज्ञेयशब्दः प्रवर्तते" इति"—श्लो० वा० पार्थ० व्या० पृ० ६०५ पं० ९। ८ "अपोह्यकल्पनायां तु वरं वस्त्वेव कल्पितम्"। श्लो० वा० अपो० श्लो० १४५। तत्त्वसं० का० ९८० पृ० ३१२। ९ कल्पते आ० हा०। १०–रूपशब्दा–भा० मा० विना। ११–च वाभि–भां० मां० विना। १२ तत्त्वसं० पञ्जि० पृ० ३१३ पं० ३। १३ "ज्ञानाकारनिषेधाच्च नान्तरार्थाभिधेयता" ॥ श्लो० वा० अपो० श्लो० १४५। तत्त्वसं० का० ९८० पृ० ३१२।

१४ "स बहिर्देशसंबद्ध इत्यनेन निरस्यते। ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवादते" ॥ श्लो० वा० शून्य० श्लो० ७९।

१५–स्यासंभवत्वात् तद्–कां०।

१६ "न चाप्यपोह्यता तस्मान्नापोहस्तेषु सिध्यति। एवमित्यादिशब्दानां नवाऽपोह्यं निरूप्यते" ॥
श्लो० वा० अपो० श्लो० १४६। तत्त्वसं० का० ९८१ पृ० ३१२।

१७ "न हि अनेवं नामेति किञ्चिदस्ति, प्रकारवचनत्वाद् 'एवं'शब्दस्य; सर्वस्य च प्रकारमात्रत्वे नैवंभावाऽयोगादिति"—श्लो० वा० पार्थ० व्या० पृ० ६०५ पं० १५। १८ पृ० ११८ पं० ७ तथा पं० २७। १९ "एतत् सर्वं कुमारिलोक्तमुपन्यस्तम्"—तत्त्वसं० पञ्जि० पृ० ३१३ पं० १३।

[ अपोहपक्षे उद्द्योतकरकृतानामाक्षेपाणामुपन्यासः ]

उद्द्योतकरस्त्वाह[1]-"अपोहः शब्दार्थः इत्ययुक्तम् अव्यापकत्वात्। यत्र द्वैराश्यं भवति तत्रे[2]तरप्रतिषेधादितरः प्रतीयते, यथा-'गौः' इति पदाद् गौः प्रतीयमानः [3]अगौर्निषिध्यमानः, न पुनः सर्वपद एतदस्ति, न ह्यसर्वं नाम किञ्चिदस्ति यत् सर्वशब्देन निवर्तेत। अथ मन्यसे एकादि असर्वं तत् सर्वशब्देन निवर्त्ते[4]त इति, तन्न, स्वार्थापवाददोषप्रसङ्गात्। एवं ह्येकादिव्युदासेन प्रवर्त्तमानः सर्वशब्दोऽङ्गप्रतिषेधादङ्गव्यतिरिक्तस्याङ्गिनोऽनभ्युपगमादनर्थकः स्यात्। अङ्गशब्देन ह्येकदेश उच्यते, एवं सति सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्त्तमानाः समुदायिव्यतिरिक्तस्यान्यस्य समुदायस्याऽनभ्युपगमादनर्थकाः प्राप्नुवन्ति। द्व्यादिशब्दानां तु समुच्चयविषयत्वादे[5]कादिप्रतिषेधे प्रतिषिध्यमानार्थानामसमुच्चयत्वादनर्थकत्वं स्यात्" [ अ० २ आ० २ सू० ६७ न्यायवा० पृ० ३२९ पं० १२-२३ ]

"यश्चायमगोऽपोहोऽगौर्न भवतीति गोशब्दस्यार्थः[6], स[7] किञ्चिद् भावः, अथाभावः? भावोऽपि सन् किं गौः, अथागौरिति। यदि गौः नास्ति विवादः। अथागौः, गोशब्दस्यागौरर्थ इत्यतिशब्दार्थकौशलम्[8]। अथाभावः, तन्न युक्तम्; प्रैष-सम्प्रतिपत्त्योरविषयत्वात्, न हि शब्दश्रवणादभावे प्रैषः—प्रतिपादकेन श्रोतुरर्थे विनियोगः—प्रतिपादकधर्म्मः, संप्रतिपत्त(त्ति)श्च[9]—[10]श्रोतृधर्म्मौ—भवेत्। अपि च, शब्दार्थः प्रतीत्या प्रतीयते, न च गोशब्दादभावं कश्चित् प्रतिपद्यते" [न्यायवा० पृ० ३२९ पं० ५-११]

किञ्च, "क्रियारूपत्वादपोहस्य विषयो वक्तव्यः। तत्र 'अगौर्न भवति' इत्ययमपोहः किं गोविषयः, अथागोविषयः? [11]यदि गोविषयः कथं गोर्गव्येवाऽभावः? अथागोविषयः कथमन्यविषयादपोहादन्यत्र प्रतिपत्तिः, न हि खदिरे छिद्यमाने पलाशे छिदा भवति। [12]अथागोर्गवि प्रतिषेधो 'गौरगौर्न भवति' इति, केनागोत्वं प्रसक्तं यत् प्रतिषिध्यत इति" [ न्यायवा० पृ० ३२९ पं० २४-पृ० ३३० पं० ४ ]

---

१ "साम्प्रतं 'सर्वशब्दस्य' इत्यादिनोद्द्योतकरोक्तमपोहदूषणमाशङ्कते"-तत्त्वस० पञ्जि० पृ० ३११ पं० १३।

"सर्वशब्दस्य कश्चार्थो व्यवच्छेद्यः प्रकल्प्यते। नाऽसर्वं(र्वो)नाम किञ्चिद्धि भवेद् यस्य निराक्रिया" ॥
"एकाद्यसर्वमिति चेदर्थापोहः प्रसज्यते। अङ्गाना प्रतिषिद्धत्वाद्दनिष्टेश्चाङ्गिन पृथक्" ॥
"एवं समूहशब्दार्थे समुदायिव्यपोहत। अन्यानिष्टेश्च सर्वेऽपि प्राप्नुवन्ति निरर्थका" ॥
"द्व्यादिशब्दा इहेष्टाश्च ये समुच्चयगोचरा। एकादिप्रतिषेधेन न भवेयुस्तथाविधा" ॥
"नागौरिति च योऽपोहो गोशब्दस्यार्थ उच्यते। स किं भावोऽथवाऽभावो भावो गौर्वाऽथवाऽप्यगौ." ॥
"गौश्चेन्नास्ति विवादोऽयमर्थस्तु विधिलक्षण। अगौर्गोशब्दवाच्यश्चेदतिशब्दार्थकौशलम्" ॥
"अभावोऽपि न युक्तोऽयं प्रैषादीनामसम्भवात्। न हि गोशब्दत कश्चिदभावं प्रतिपद्यते" ॥

तत्त्वस० का० ९८२-९८३-९८४-९८५-९८६-९८७-९८८ पृ० ३१३।

२ "तत्रेतरप्रतिषेधादितरत् प्रतीयते"-तत्त्वसं० पञ्जि० पृ० ३१४ पं० ३। ३ "अगौर्निषेध्यमान"-तत्त्वसं० पञ्जि० पृ० ३१४ पं० ३। ४-वर्त्येत भा० मा०। ५-यत्वादाकाशा(देकदेशा)दि-भा० मा० विना। -यत्वादाकाशादिप्रतिषिध्यमाना-भा० मा० विना। ६-स्यार्थः किञ्चि (किंस्वित्) आ० हा०। ७ "स किं भाव अथाऽभाव"-न्यायवा० पृ० ३२९ पं० ६। तत्त्वस० पञ्जि० पृ० ३१४ पं० १२। ८ इत्यतिसंशब्दा-भा०। इत्यादिशब्दा-वा०। ९ "सम्प्रतिपत्ति श्रोतृधर्म"-तत्त्वस० पञ्जि० पृ० ३१४ पं० १७। १० श्रोत्रध-भा० मा० विना। श्रोत्रध-वि०। ११ "यदि गोर्विषय"-तत्त्वस० पञ्जि० पृ० ३१४ पं० २१।

१२ "नागौर्गौरिति शब्दार्थः कस्याश्चापोह इष्यते। केन ह्यगोत्वमासक्तं गौ(गो)र्येनैतदपोह्यते" ॥

तत्त्वसं० का० ९८९ पृ० ३१४।

"इतश्चायुक्तोऽपोहः विकल्पानुपपत्तेः । तथाहि-योऽयमगोरपोहो गवि स किं गोव्यतिरिक्तः, आहोश्विदव्यतिरिक्तः ? यदि व्यतिरिक्तः स किमाश्रितः, अथानाश्रितः ? यद्याश्रितस्तदाऽऽश्रितत्वाद् गुणः प्राप्तः, ततश्च—गोशब्देन गुणोऽभिधीयते 'न गौः' इति—'गौस्तिष्ठति' 'गौर्गच्छति' इति न सामानाधिकरण्यं प्राप्नोतीति । अथानाश्रितस्तदा केनार्थेन 'गोरगोपोहः' इति षष्ठी स्यात् ? अथाव्यतिरिक्तस्तदा गौरेवासाविति न किञ्चित् कृतं भवति" [ न्यायवा० पृ० ३३० पं० ८-१४ ]

"अयं चापोहः प्रतिवस्त्वेकः, अनेको वेति वक्तव्यम् । यद्येकस्तदानेकगोद्रव्यसम्बन्धी गोत्वमेवासौ भवेत् । अथानेकस्ततः पिण्डवदानन्त्यादाख्यानानुपपत्तेरवाच्य एव स्यात्" [ न्यायवा० पृ० ३३० पं० १५-१७ ] किञ्च, "इदं तावत् प्रष्टव्यो भवति भवान्-किमपोहो वाच्यः, अथावाच्य इति । वाच्यत्वे विधिरूपेण वाच्यः स्यात्, अन्यव्यावृत्त्या वा ? तत्र यदि विधिरूपेण तदा नैकान्तिकः शब्दार्थः 'अन्यापोहः शब्दार्थः' इति । अथान्यव्यावृत्त्येति पक्षस्तदा तस्याप्यन्यव्यवच्छेदस्यापरेणान्यव्यवच्छेदरूपेणाभिधानम् तस्याप्यपरेणेत्यव्यवस्था स्यात् । अथावाच्यस्तदा 'अन्यशब्दार्थापोहं शब्दः करोति' इति व्याहन्येत" [ न्यायवा० पृ० ३३० पं० १८-२२ ]

आचार्यदिग्नागोक्तम्—"सर्वत्राभेदादाश्रयस्यानुच्छेदात् कृत्स्नार्थपरिसमाप्तेश्च यथाक्रमं जातिधर्म्मा एकत्व-नित्यत्व-प्रत्येकपरिसमाप्तिलक्षणा अपोह एवावतिष्ठन्ते; तस्माद् गुणोत्कर्षादर्थान्तरापोह एव शब्दार्थः साधुः" [ ] इत्येतदाशङ्क्य कुमारिल उपसह(संहर)न्नाह—

"अपि चैकत्व-नित्यत्व-प्रत्येकसमवायिताः (ताः) ।
निरुपाख्येष्वपोहेषु कुर्वतोऽसूत्रकः पटः" ॥
"तस्माद् येष्वेव शब्देषु नञ्योगस्तेषु केवलम् ।
भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते" ॥ [श्लो० वा० अपो० श्लो० १६३-१६४]

'स्वात्मैव' इति स्वरूपमेव विधिलक्षणम् । 'अन्यत्र' इति नञा रहिते । तन्नापोहः शब्दार्थ इति भट्टोद्द्योतकरादयः ।

---

१ "अगोरपोहो यश्चायं गवि शब्दार्थ उच्यते । स किं गोर्व्यतिरिक्तो वाऽव्यतिरिक्त उपेयते" ॥
"विभिन्नोऽप्याश्रितो वा स्यादथवा स्यादनाश्रितः । आश्रितत्वे गुणः प्राप्तो न द्रव्यवचनं ततः" ॥
"अतो(ऽ)गौरिति शब्देन गुणमात्राभिधानतः । सामानाधिकरण्यं स्यान्न गौर्गच्छति तिष्ठति" ॥
"अथाऽनाश्रित एवाय यदर्थं(षष्ठ्यर्थ)स्तस्य को भवेत् । येनासौ प्रतिषेधाय गौरिति व्यपदिश्यते" ॥
"अथ चाऽव्यतिरिक्तोऽयमन्यापोहस्त्वयेष्यते । गौरेवायमतः प्राप्तः किमुक्तमधिकं ततः" ॥

तत्त्वस० का० ९९०-९९१-९९२-९९३-९९४ पृ० ३१४-३१५ ।

२-युक्तेऽपोह्ये विकल्पा-वा० वा० विना । ३-यते तेनागौरिति-वा० । ४-स्तथा भा० मा० विना ।

५ "प्रतिभावमपोहोऽयमेकोऽनेकोऽपि वा भवेत् । यद्येकोऽनेकगोयुक्तो गोत्वमेव भवेदसौ" ॥
"अनेकत्वेऽपि चानन्त्यं पिण्डवत् सम्प्रयुज्यते । तेन भेदवदेवाऽस्य वाच्यता नोपयुज्यते" ॥

तत्त्वस० का० ९९५-९९६ पृ० ३१५ ।

६ "अन्यापोहश्च किं वाच्य किं वाऽवाच्योऽयमिष्यते । वाच्योऽपि विधिरूपेण यदि वाऽन्यनिषेधतः" ॥
"विध्यात्मनाऽस्य वाच्यत्वे त्याज्यमेकान्तदर्शनम् । सर्वत्राऽन्यनिरासोऽयं शब्दार्थ इति वर्णितम्" ॥
"अथाऽपोहव्युदासेन यद्यपोहोऽभिधीयते । तत्र तत्रैवमिच्छायामनवस्था भवेत् ततः" ॥
"अथाऽप्यवाच्य एवाय यद्यपोहस्त्वयेष्यते । तेनाऽन्यापोहकृच्छब्द इति वाध्येत ते वचः" ॥

तत्त्वस० का० ९९७-९९८-९९९-१००० पृ० ३१५-३१६ ।

७ "एतत् सर्वमुद्द्योतकरेणोक्तमुपन्यस्तम् तत्राचार्यदिग्नागेनोक्तम्"-तत्त्वसं० पञ्जि० पृ० ३१६ पं० १२ ।

८ "योऽपि जातिधर्मातिदेशोऽपोहे कृतः "जातिधर्मव्यवस्थितेः" इति, सोऽयुक्तः"-श्लो० वा० पार्थ० व्या० पृ० ६११ पं० १४ ।

९ उपहसन्नाह भा० मा० । "उपसहरन्नाह"-तत्त्वस० पञ्जि० पृ० ३१६ पं० १५ । "उपसंहरति"-श्लो० वा० पार्थ० व्या० पृ० ६११ पं० १५ । १०-समवायिनि । वा० वा० विना । ११ तत्त्वस० का० १००१ पृ० ३१६ । १२ तत्त्वस० का० १००२ पृ० ३१६ ।

स० त० २६

[ स्वपक्षाक्षेपेषु प्रतिविधातव्येषु पूर्वम् अपोहवादिकृतं स्वमतस्पष्टीकरणम् ]

अत्र सौगताः प्रतिविदधति—[1]द्विविधोऽस्माकमपोहः पर्युदासलक्षणः [2]प्रसह्यप्रतिषेधलक्षणश्च। पर्युदासलक्षणोऽपि द्विविधः—बुद्धिप्रतिभासोऽर्थेष्वनुगतैकरूपत्वेनाध्यवसितो बुद्ध्यात्मा, विजातीय[3]व्यावृत्तस्व[4]लक्षणार्थात्मकश्च। [5]तत्र यथा हरीतक्यादयो बहवोऽन्तरेणापि सामान्यलक्षणमेकमर्थं ज्वरादिशमनं कार्यमुपजनयन्ति तथा शावलेयादयोऽप्यर्थाः सत्यपि भेदे [6]प्रकृत्यैकाकारपरामर्शहेतवो भविष्यन्त्यन्तरेणापि वस्तुभूतं सामान्यम्। तदनुभवबलेन यदुत्पन्नं विकल्पज्ञानं तत्र यदर्थाकारतया[7]ऽर्था(र्थ)प्रतिबिम्बकं ज्ञानादभिन्नमाभाति तत्र 'अन्यापोहः' इति व्यपदेशः। [8]न चासावर्थाभासो ज्ञानतादात्म्येन व्यवस्थितः सन् बाह्यार्थाभावेऽपि तस्य तत्र प्रतिभासनाद् बाह्यकृतः।

न चापोहव्यपदेशस्तत्र निर्निमित्तः, मुख्य-गौणभेदभिन्नस्य निमित्तस्य सद्भावात्। तथाहि—[9]विकल्पान्तरारोपित[10]प्रतिभासान्तरोद्भावन(प्रतिभासान्तराद् भेदेन) स्वयं प्रतिभासनात् मुख्यस्तत्र तद्व्यपदेशः 'अपोह्यत इत्यपोहः अन्यस्मादपोहः अन्यापोहः' इति व्युत्पत्तेः। [11]उपचारात् तु त्रिभिः कारणैस्तत्र तद्व्यपदेशः—(१)कारणे कार्यधर्मारोपाद् वा अन्यव्यावृत्तवस्तुप्राप्तिहेतुतया, (२) कार्ये वा कारणधर्मोपचारात् [12]अन्यविविक्तवस्तुद्वारायाततया, (३) विजातीय[13]पोढपदार्थेन सहैक्येन भ्रान्तैः प्रतिपत्तृभिरध्यवसित[14]त्वाच्चेति। [15]अर्थस्तु विजातीयव्यावृत्तत्वाद् मुख्यतस्तद्व्यपदेशभाक्।

[16]प्रसज्यप्रतिषेधलक्षणस्त्वपोहः—

"प्रसज्यप्रतिषेधस्तु गौरगौर्न भवत्ययम्।
इति [17]विस्पष्ट एवायमन्यापोहोऽवगम्यते"[18] ॥ [ तत्त्वसं० का० १०१० ]

---

१ "तथाहि-द्विविधोऽपोहः पर्युदास-निषेधतः। द्विविधः पर्युदासोऽपि बुद्ध्यात्माऽर्थात्मभेदतः" ॥
तत्त्वसं० का० १००४ पृ० ३१६।

२ प्रसज्य-कां०। ३ व्यावृत्त्यस्व-भा० वा० विना। ४-स्वलक्षणमोत्मकश्च वा० बा०। "विजातीयव्यावृत्तमर्थस्वलक्षणमित्यर्थः"-तत्त्वसं० पञ्जि० पृ० ३१७ पं० ४। "विजातीयव्यावृत्तसर्वस्वलक्षणम्"-स्याद्वादर० पृ० ३४९ द्वि० पं० १। शास्त्रवा० स्याद्वादक० पृ० ४०१ द्वि० पं० ९।

५ "एकप्रत्यवमर्शस्य य उक्ता हेतवः पुरा। अभयादिसमा अर्था प्रकृत्यैवान्यभेदिनः" ॥
"तानुपाश्रित्य यद् ज्ञाने भात्यर्थप्रतिबिम्बकम्। कल्पकेऽर्थात्मताऽभावेऽप्यर्थो इत्येव निश्चितम्" ॥
तत्त्वसं० का० १००५-१००६ पृ० ३१७।

६ "प्रकृत्यैकाकारप्रत्यवमर्शस्य हेतवः"-तत्त्वसं० पञ्जि० पृ० ३१७ पं० १३। ७-याऽर्थोपपत्तिविंबकं वा० बा०।-याऽर्थप्रतिबन्धकं भा० मा०।-याऽर्थाप्रतिबन्धकं हा० वि०। "तत्र यदर्थाकारतयाऽर्थप्रतिबिम्बकमर्थाभासो भाति"-तत्त्वसं० पञ्जि० पृ० ३१७ पं० १६। प्रमेयक० पृ० १२८ द्वि० पं० १। स्याद्वादर० पृ० ३४९ द्वि० पं० ३। शास्त्रवा० स्याद्वादक० पृ० ४०१ द्वि० पं० १२। ८ न चासामर्थ्याभावो ज्ञानावतदात्म्येनाव्यवस्थितः सन्नाह्यार्थाभावेऽपि तस्य तत्र प्रतिभासनाद्बाह्यकृतः वा० बा०।

९ "प्रतिभासान्तराद् भेदादन्यव्यावृत्तवस्तुन। प्राप्तिहेतुतयाऽश्लिष्टवस्तुद्वारा गतेरपि ॥
"विजातीयपरावृत्तं तत् फलं यत् स्वलक्षणम्। तस्मिन्नध्यवसायाद्वा तादात्म्येनाऽस्य विप्लुतैः" ॥
"तत्राऽन्यापोह इत्येषा सञ्ज्ञोक्ता सनिबन्धना। स्वलक्षणेऽपि तद्वेतावन्यविश्लेषभावतः" ॥
तत्त्वसं० का० १००७-१००८-१००९-पृ० ३१७-३१८।

१०-प्रतिभासान्तरोद्भावनं स्वयं हा० वि०। "विकल्पान्तरारोपितप्रतिभासान्तराद् भेदेन स्वयं प्रतिभासनाद् मुख्यः"-तत्त्वसं० पञ्जि० पृ० ३१७ पं० २७। स्याद्वादर० पृ० ३४९ द्वि० पं० ५। ११ उपचारस्तु वा०। १२ अन्यत्यवि-भा० कां०। १३-यापोहपदार्थे-भा०। "विजातीयापोहपदार्थेन"-तत्त्वसं० पञ्जि० पृ० ३१८ पं० ६। १४-त्वात्स्वेति भा० हा० वि० वा० बा०। १५ अचस्तु वा०। १६-सह्य-भा०। स्याद्वादर० पृ० ३४९ द्वि० पं० ७। शास्त्रवा० स्याद्वादक० पृ० ४०१ द्वि० पं० १३। १७ विशिष्ट वा० बा० विना। १८ तत्त्वसं० पृ० ३१८ शब्दार्थपरीक्षा।

[1]तत्र य एव [2]हि शाब्दे ज्ञाने साक्षा[3]द् भासते स एव[4] शब्दार्थो युक्तः। न[5] चात्र प्रसज्यप्रतिषेधावसायः, वाच्याध्यवसित[6]स्य बुद्ध्याकारस्य शब्दजन्यत्वात्। नापीन्द्रियज्ञानवद् वस्तुस्वलक्षणप्रतिभासः, किं तर्हि? बाह्यार्थाध्यवसायिनी केवलशाब्दी बुद्धिरुपजायते तेन तदेवार्थप्रतिबिम्बकं शाब्दे ज्ञाने साक्षात् तदात्मतया प्रतिभासनाच्छब्दार्थो युक्त इति अपोहत्रये प्रथमोऽपोहव्यपदेशमासादयति।

यद्य[7]पि शब्दस्यार्थेन सह वाच्यवाचकभावलक्ष[8]णसम्बन्धः प्रसिद्धो नासौ कार्यकारणभावादन्योऽवतिष्ठते, [9]बाह्यरूपतयाऽध्यवसितस्य बुद्ध्याकारस्य शब्दजन्यत्वाद् वाच्यवाचकलक्षण[10]सम्बन्धः कार्यकारणभावात्मक एव; तथा च शब्दस्तस्य [11]प्रतिबिम्बात्मनो जनकत्वाद् वाचक उच्यते प्रतिबिम्बं च शब्दजन्यत्वाद् वाच्यम्।

[ 'निषेधमात्रमेव अन्यापोहः' इति मत्वा अपोहपक्षमाक्षिप्तवतः कौमारिलस्य निराकरणम् ]

तेन यदुक्त[12]म्—

'निषेधमा[13]त्रं नैवेह शाब्दे ज्ञानेऽवभासते'। इति,

तदसङ्गतम्; निषेधमात्रस्य शब्दार्थत्वानभ्युपगमात्। एवं तावत् प्रतिबिम्बलक्षणोऽपोहः साक्षाच्छब्दैरुपजे[14]न्यत्वाद् मुख्यः शब्दार्थो व्यवस्थितः; शेषयोरप्यपोहयोर्गौ[15]णं शब्दार्थत्वमविरुद्धमेव। तथाहि—

"[16]साक्षादपि च एकस्मि[17]न्नेवं च प्रतिपा[18]दिते।
[19]प्रसज्यप्रतिषेधोऽपि सामर्थ्येन प्रतीयते" ॥ [ तत्त्वसं० का० १०१३ ]

सामर्थ्यं च गवादिप्रतिबिम्बात्मनोऽपरप्रतिबिम्बात्मविविक्तत्वा[20]त् तदसंयुक्ततया प्रतीयमानत्वम्, तथा तत्प्रतीतौ प्रसज्यलक्षणापोहप्रतीतेरप्यवश्यं सम्भवात्; अतस्तस्यापि गौणशब्दार्थत्वम्। स्वलक्षणस्यापि गौणशब्दार्थत्वमुपपद्यत एव। तथाहि–प्रथमं यथावस्थितवस्त्वनुभवः, ततो विवक्षा, ततस्ताल्वादिपरिस्पन्दः, ततः शब्द इत्येवं परम्परया यदा शब्दस्य [21]बाह्यार्थैर्भिसम्बन्धः स्यात् तदा विजा[22]तीयव्यावृत्तस्यापि [23]वस्तुनोऽर्थापत्तितोऽधिगम इत्यन्यव्यावृत्तवस्त्वात्माऽपोहशब्दार्थ इत्युप[24]चर्यते। तदुक्तम्—

"न तदात्मा परात्मेति सम्बन्धे सति वस्तुभिः।
व्यावृत्तव[25]स्त्वधिगमोऽप्यर्थादेव भवत्यतः[26]" ॥ [ तत्त्वसं० का० १०१४ ]
"तेनायमपि शब्दस्य स्वार्थ इत्युपचर्यते।
न च साक्षादयं शब्दै[27] द्वि(द्वैर्द्वि) [28]विधोऽपोह उच्यते" ॥ [ तत्त्वसं० का० १०१५ ]

इति।

---

१ "तत्रायं प्रथमः शब्दैरपोह प्रतिपाद्यते। बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात् समुद्भवात्" ॥ तत्त्वसं० का० १०११ पृ० ३१८।

२ हि शब्दे आ० हा० वि० विना। ३–क्षात् प्रतिभासते भा० मां०। ४–च शब्दोऽर्थो आ० हा०। –च शाब्दार्थो वा० बा०।–च शाब्दोऽर्थो का०। "स एव शब्दार्थो युक्त."–तत्त्वसं० पञ्जि० पृ० ३१८ पं० २३। स्याद्वादर० पृ० ३४९ द्वि० पं० ९। ५ न चाद्य भा०। "न चात्र प्रसज्यप्रतिषेधाध्यवसायः"–तत्त्वसं० पञ्जि० पृ० ३१८ पं० २३। ६–तबुद्ध्या–वा० बा०।

७ "तद्रूपप्रतिबिम्बस्य धिय शब्दाच्च जन्मनि। वाच्यवाचकभावोऽयं जातो हेतुफलात्मकः ॥ तत्त्वस० का० १०१२ पृ० ३१८।

८–क्षणः सम्ब–कां०। ९ वाह्यरूपतया वाचकलक्षणसंबन्धः कार्यकारणभावात्मक एव भां० भा० विना। स्याद्वादर० पृ० ३४९ द्वि० पं० १२। १०–णस्संबन्धः भा० मा०। ११–प्रतिबिम्बस्य जनक–भा० मां०। तथैव तत्त्वस० पञ्जि० पृ० ३१९ पं० ७। १२ पृ० १८५ पं० २६। १३–मात्रमैवेह शा–वा० बा०।–मात्रमेवेह आ० हा० वि०। १४–जन्यमानत्वाद् मुख्यः भां० भां०। तथैव तत्त्वस० पञ्जि० पृ० ३१९ पं० १०। १५–गौणश–वा० बा०। १६ "साक्षादाकार एतस्मिन्नेवं च"–तत्त्वसं० पृ० ३१९ पं० १३। १७–स्मिन्नेव च बा० का०। १८–पाद्यते वा० बा० विना। १९–प्रसह्य–भां०। २०–त्वाच्च संयु–वि०। २१ बाह्यार्थैर्वस्तुभिः संबन्धः वा० बा०। बाह्यैर्भिसंबन्धः वि०। बाह्यैर्वस्तुभिः संबन्धः भा० मा०। "यदा शब्दस्य वस्तुभिर्बाह्यैरग्न्यादिभि संबन्धः"–तत्त्वसं० पञ्जि० पृ० ३१९ पं० २५। २२–तीयाव्यावृ–वा० बा० विना। २३–स्तुनोऽर्थोपपत्तितो का०। २४–पवर्यते हा०। –पवर्जते भा०। २५–वस्त्वाभिग–वा०। २६ आत्मवा० स्याद्वादर० पृ० ४०२ प्र० पं० ४। २७ शब्दे द्वि–आ० हा० वि०। "शाब्दो द्विविधोऽपोह उच्यते"–तत्त्वसं० पृ० ३१९ पं० १८। २८–विधापोह वा०।

[ उद्द्योतकरदूषितस्य दिग्नागकथनस्य अभिप्रायमुद्भाव्य कण्टकोद्धारः ]

तेनाचार्यदिग्नागस्योपरि यद् उद्द्योतकरेणोक्तम्–

"यदि[1] शब्दस्यापोहोऽभिधेयोऽर्थस्तदाऽभिधेयार्थव्यतिरेकेणास्य स्वार्थो वक्तव्यः, अथ स एव स्वार्थस्तथापि व्याहतमेतत् अन्यशब्दार्थापोहं हि स्वार्थं कुर्वती श्रुतिरभिधत्त इत्युच्यते इति, अस्य हि वाक्यस्यायमर्थस्तदानीं भवत्यभिद्यानाभिधत्त[2] इति" [अ० २ आ० २ सू० ६७ न्यायवा० पृ० ३३० पं० २२–पृ० ३३१ पं० ३ ] तदेतद् वाक्यार्था[3]परिज्ञानादुक्तम्। तथाहि–स्वलक्षणमपि[4] शब्दस्योपचारात् स्वार्थ इति प्रतिपादितम्[5]; अतः स्वलक्षणात्मके स्वार्थेऽर्थान्तरव्यवच्छेदं प्रतिविम्बान्तराद् व्यावृत्तं प्रतिविम्बात्मकमपोहं कुर्वती श्रुतिरभिधत्ते[6] इत्युच्यते इत्येतदाचार्यीयं[7] वचनमविरोधि।

अयमाचार्यस्याशयः–न[8] शब्दस्य बाह्यार्थाध्यवसायिविकल्पप्रतिविम्बोत्पादव्यतिरेकेणान्यो बाह्याभिधानव्यापारः, निर्व्यापारत्वात् सर्वधर्माणाम्; अतो बाह्यार्थाध्यवसायेन प्रवृत्तं विकल्पप्रतिविम्बं जनयन्ती श्रुतिः स्वार्थमभिधत्त इत्युच्यते, न[9] तु विभेदिनं[10] सजातीयविजातीयव्यावृत्तं[11] स्वलक्षणमेषा स्पृशति, तथाविधप्रतिविम्बजनकत्वव्यतिरेकेण नापरा श्रुतेरभिधा[12] क्रियाऽस्तीत्यर्थः। एवंभूते चापोहस्य स्वरूपे न परोक्तदूषणावकाशः। तेन यदुक्तम्[13]–

'यदि गौरिति शब्दश्च' इत्यादि।

तत्र[14] गोबुद्धिमेव हि शब्दो जनयति, अन्यविश्लेषस्तु सामर्थ्याद् गम्यते न तु शब्दात् तस्य[15] गोप्रतिविम्बस्य प्रतिभासान्तरात्मरहितत्वात्–अन्यथा नियतरूपस्य[16] प्रतिपत्तिरेव न स्यात्–[17]तेनापरो ध्वनिर्गोबुद्धेर्जनको न मृग्यते, गोशब्देनैव गोबुद्धेर्जन्यमानत्वात्।

यदपि[18]–'ननु ज्ञानफलाः शब्दाः' इत्यादि कुमारिल[19]वचनम्,

तदप्यसारम्, यतो यथा[20] 'दिवा न भुङ्क्ते पीनो देवदत्तः[21]' इत्यस्य वाक्यस्य साक्षाद् दिवाभोजनप्रतिषेधः स्वार्थः, अभिधानसामर्थ्यगम्यस्तु रात्रिभोजनविधिर्न साक्षात्; तद्वत् 'गौः' इत्यादेरन्वयप्रतिपादकस्य[22] शब्दस्यान्वयज्ञानं साक्षात् फलम् व्यतिरेकगतिस्तु सामर्थ्यात्; यस्मादन्वयो

---

१ "यदि च शब्दस्याऽपोहो नाभिधेयार्थ"–न्यायवा० पृ० ३३० पं० २२। २ "भवत्यन्यदनभिदधानोऽभिधत्त इति"–न्यायवा० पृ० ३३१ पं० २। ३ वाच्यार्थो–भा० मा०।

४ "अर्थान्तरव्यवच्छेदं कुर्वती श्रुतिरुच्यते। अभिधत्त इति स्वार्थमित्येतदविरोधि तत्" ॥

तत्त्वस० का० १०१६ पृ० ३२०।

५ पृ० २०३ पं० २५। ६–भिवर्तत इत्यु–आ० हा० वि०। ७–चार्यीयं आ० हा० वि०।

८ "बाह्यार्थाध्यवसायेन प्रवृत्तं प्रतिविम्बकम्। उत्पादयति येनेयं तेनाहेत्यपदिश्यते" ॥

तत्त्वस० का० १०१७ पृ० ३२०।

९ "न तु स्वलक्षणात्मानं स्पृशत्येषा विभेदिनम्। तन्मात्राशातिरेकेण नास्त्यस्या अभिधा क्रिया" ॥

तत्त्वसं० का० १०१८ पृ० ३२०।

१० विभेदनं आ० वा० वा०। ११ सजातीयव्यावृत्तं आ० हा० वि०। १२ श्रुतिरभिधा भा० मा०। १३ पृ० १८६ पं० ३।

१४ "तस्य च प्रतिविम्बस्य गतावेवानुगम्यते। सामर्थ्यादन्यविश्लेषो नास्यान्यात्मकता यत" ॥

तत्त्वस० का० १०१९ पृ० ३२०।

१५ तस्यागोप्रतिप्रभासान्त–आ०। तस्य गोप्रतिभासान्त–हा० वि०। तस्य गोशप्रतिभासान्त–वा० वा०। १६–रूपस्याप्रति भा० मा० विना। "नियतरूपस्य तस्य प्रतिपत्तिरेव न स्यात्"–तत्त्वस० पञ्जि० पृ० ३२० पं० २८। १७ तेन परो भा० मा० विना। १८ पृ० १८६ पं० ५। पृ० १८५ गतं चतुर्दशतम टिप्पणं विलोकनीयम्। १९ मुद्रिते श्लोकवार्तिके नैतत् कुमारिलवचनं दृश्यते, तत्त्वसङ्ग्रहे तु मूलकारिकासु दृश्यते, किन्तु तत्पञ्जिकाकारेण कमलशीलेन तत् पद्यं भामहकर्तृकत्वेन परिचायितम्, उपलभ्यते चैतत् भामहालंकारे।

२० "दिवाभोजनवाक्यादेरिवाऽस्यापि फलद्वयम्। साक्षात् सामर्थ्यतो यस्मान्नान्वयोऽव्यतिरेकवान्" ॥

तत्त्वस० का० १०२० पृ ३२१।

२१–दत्तस्य वाक्यस्य भा० मा० वा० वा० विना। २२–कशब्दस्या–भा० मा० वा० वा० विना।

विधिरव्यतिरेकवाञ्चास्ति विजातीयव्यवच्छेदाव्यभिचारित्वात् तस्य; इत्येकज्ञानस्य फलद्वयमविरुद्धमेव। [1]यतो यदि साक्षादेकस्य शब्दस्य विधि-प्रतिषेधज्ञानलक्षणं फलद्वयं युगपदभिप्रेतं स्यात् तदा भवेद् विरोधः; यदा तु दिवाभोजनवाक्यवदेकं साक्षात् अपरं सामर्थ्यलभ्यं फलमभीष्टं तदा को विरोधः?

यच्चोक्तम्[2]-'प्रागगौरिति ज्ञानम्' इत्यादि,

तदपि निरस्तम्; अनभ्युपगमात्—न ह्यगोप्रतिषेधमाभिमुख्येन गोशब्दः करोतीत्यभ्युपगतमस्माभिः, किं तर्हि? सामर्थ्यादिति।

यच्चोक्तम्[3]—'अगोनिवृत्तिः सामान्यम्' इत्यादि,

तदप्यसत्; बाह्य[4]रूपतयाऽध्यस्तो बुद्ध्याकारः सर्वत्र शावलेयादौ 'गौर्गौः' इति समानरूपतयावभासनात् सामान्यमित्युच्यते। बाह्यवस्तुरूपत्वमपि तस्य भ्रान्तप्रतिपत्तृवशाद् व्यवह्रियते न परमार्थतः।

[5]ननु च यदि कदाचित् मुख्यं वस्तुभूतं सामान्यं [6]बाह्यवस्त्वाश्रितमुपलब्धं भवेत् तदा तत्साधर्म्यदर्शनात् तत्र [7]सामान्यभ्रान्तिर्भवेत् यावता मुख्यार्थासम्भवे सैव भवतामनुपपन्ना, असदेतत्; साधर्म्यदर्शनाद्यनपेक्षद्विचन्द्रादिज्ञानवत् अन्तरुपप्लवादपि तज्ज्ञानसम्भवात्; न हि [8]सर्वा भ्रान्तयः साधर्म्यदर्शनादेव भवन्ति, किं तर्हि? अन्तरुपप्लवादपीत्यदोष इति सिद्ध[9]साध्यतादोषो न भवति। [10]स एव बुद्ध्याकारो बाह्यतयाऽध्यस्तोऽपोहो बाह्यवस्तुभूतं सामान्यमिवो[11]च्यते वस्तुरूपत्वेनाध्यवसायात्, शब्दार्थत्वाऽपोहरूपत्वयोः प्रागेव कारणमुक्तम्—

'[12]बाह्यार्थाध्यवसायिन्या बुद्धेः शब्दात् स[13]मुद्भ[14]वात्'

'[15]प्रतिभासान्तराद् भेदात्' इत्यादिना।

कस्मात् पुनः परमा[16]र्थतः सामान्यमसौ न भवति? बुद्धे[17]र्व्यतिरिक्तत्वेनार्थान्तरानुगमाभावात्। तदु[18]क्तम्—

'ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत्'।

न च भवद्भिर्बुद्ध्या[19]कारो गोत्वाख्यं सा[20]मान्यं वस्तुरूपमिष्टम्, किं त[21]र्हि? बाह्यशावलेयादिगतमेकमनुगामि गोत्वादि सामा[22]न्यमुपकल्पितम्; अतः कुतः सिद्धसाध्यता। य[23]च्चोक्तम्—

'निषेधमात्ररू[24]पश्च' इत्यादि,

तस्यानभ्युपगतत्वादेव न दोषः। यच्चेदमु[25]क्तम्—

'त[26]स्यां चाश्वादिबुद्धीनाम्' इत्यादि,

---

१ "नाभिमुख्येन कुरुते यस्माच्छब्द इद द्वयम्। स्वार्थाभिधानमन्यस्य विनिवृत्तिं च वस्तुन" ॥
तत्त्वसं० का० १०२१ पृ० ३२१।

२ पृ० १८६ पं० ७। ३ पृ० १८६ पं० १७ तथा ३९।

४ "तादृशः प्रतिभासश्च सामान्यं गोत्वमिष्यते। सर्वत्र शावलेयादौ समानत्वावसायतः" ॥
तत्त्वसं० का० १०२२ पृ० ३२१।

५ "वस्त्वित्यध्यवसायाच्च वस्त्वित्यपि तदुच्यते। भ्रान्तिरेव हि तज्ज्ञानं भ्रान्तं जातं स्वबीजतः ॥
तत्त्वसं० का० १०२३ पृ० ३२२।

६ बाह्यं वस्त्वा-बा०। बाह्यवस्तुरूपत्वं निश्चितमुप-वि०। ७ "सामान्य भ्रान्तिर्भवेत्"-तत्त्वसं० पञ्जि० ३२२ प० ५। ८ सर्वभ्रान्त-आ०। ९ पृ० १८७ प० १०।

१० "स एव च तदाकारशब्दार्थोऽपोह उच्यते। सामान्यं वस्तुरूपं न तथा भ्रान्त्याऽवसायत" ॥
तत्त्वसं० का० १०२४ पृ० ३२२।

११-च्यतेऽवस्तु-बा०। १२ बाह्यार्थव्यवसा-आ० हा० वि०। १३-मुद्भेदात् आ०। १४ पृ० २०३ पं० १ तथा २७। १५ पृ० २०२ पं० १० तथा ३१। १६-मार्थतत्सामा-आ० हा० वि०।

१७ "सामान्यवस्तुरूपत्वं न युक्तं तस्य भाविकम्। बुद्धेरनन्यरूपं हि यायादर्थान्तर कथम्" ॥
तत्त्वसं० का० १०२५ पृ० ३२२।

१८ पृ० १८४ पं० १० तथा ३१। १९-कारे गो-आ० हा०।-कारगो वि०। २०-मान्यवस्तु-बा०। २१ तर्हि शाव-वि०। २२-न्यमनुपकल्पित-आ० का० बा०।-न्यमनुकल्पित-हा०।-न्यमसौवुपकल्पित-वि०। २३ पृ० १८७ प० २१ तथा ३९। २४-रूपाश्च आ०। २५ पृ० १८७ पं० २२ तथा ४३। २६ तस्यां वाश्वा-बा० वा० विना।

तदप्यसद्; यतः–

"यद्यप्यव्यतिरिक्तोऽयमाकारो बुद्धिरूपतः।
तथापि बाह्यरूपत्वं भ्रान्तैस्तस्यावसीयते" ॥ [तत्त्वसं० का० १०२६]

यदपि 'शब्दार्थोऽर्थानपेक्षः' इति,

तत्र, यत्र हि पारम्पर्याद् वस्तुनि प्रतिबन्धोऽस्ति तस्य भ्रान्तस्यापि सतो विकल्पस्य मणिप्रभायां मणिबुद्धिवत्र बाह्यार्थानपेक्षत्वमस्ति, अतोऽसिद्धं बाह्यार्थानपेक्षत्वम्।

यच्च–'वस्तुरूपावभासा (रूपा च सा) बुद्धिः' इत्यादि,

तत्र यद्यपि वस्तुरूपा सा बुद्धिस्तथापि तस्यास्तेन बाह्यात्मना बुद्ध्यन्तरात्मना च वस्तुत्वं नास्तीति प्रतिपादितम्। तेन 'बुद्धेर्बुद्ध्यन्तरापोहो' न गम्यते' इत्यसिद्धम् सामर्थ्येन गम्यमानत्वात्।

'असत्यपि च बाह्येऽर्थे' इति,

अत्र यथैव हि प्रतिबिम्बात्मकः प्रतिभाख्योऽपोहो वाक्यार्थोऽस्माभिरुपवर्णितस्तथैव पदार्थोऽपि, यस्मात् पदादपि प्रतिबिम्बात्मकोऽपोह उत्पद्यत एव, पदार्थोऽपि स एव; अतो न केवलं 'वाक्यार्थ इति' विप्रतिपत्तेरभावाद् नोप(पा)लम्भो युक्तः।

'बुद्ध्यन्तराद् व्यवच्छेदो न बुद्धेः प्रतीयते' इत्यादावपि

यतः एव हि स्वरूपोत्पादनमात्रादन्यमंशं सा न बिभर्ति तत एव स्वभावव्यवस्थितत्वाद् बुद्धेर्बुद्ध्यन्तराद् व्यवच्छेदः प्रतीयते; अन्यथाऽन्यस्वरूपं बिभ्रती कथं ततो व्यवच्छिन्ना प्रतीयते?

'भिन्नसामान्यवचनाः' इत्यादावपि

यथैवं ह्यपोहस्य निःस्वभावत्वादरूपस्य परस्परतो भेदो नास्तीत्युच्यते तथैवाऽभेदोऽपि इति कथमभिन्नार्थाभावे पर्यायत्वासञ्जनं क्रियते? अभेदो ह्येकरूपत्वम्, तच्च नीरूपेष्वेकरूपत्वं नास्तीति न

---

१ पृ० १८७ पं० ४४ तथा पृ० १८८ पं० ११। २–र्थोऽनपेक्ष–हा०।

३ "तस्य नार्थानपेक्षत्वं पारम्पर्यात् तदागते। तेनात्मना न वस्तुत्वं नैवास्तीत्युपपादितम्" ॥

तत्त्वसं० का० १०२७ पृ० ३२३।

४–स्तुने प्रतिबिम्बोऽस्ति तस्याभ्रान्त–बा०। ५–क्षमस्ति हा०। ६–क्षं यच्च भा० मा० विना। ७ पृ० १८८ पं० ४ तथा पं० २७। ८ वस्तुरूपावसा सा बुद्धिः वा० बा०। वस्तुत्वरूपावभासबुद्धिः भा० मां०। ९–यत्रापि मां०। १०–सा वस्तु–बा०। ११ पृ० २०३ प० २३। "बाह्यात्मना बुद्ध्यन्तरात्मना न वस्तुत्वं नास्तीत्युपपादितम् 'न तदात्मा परात्मा' इत्यादिना"–तत्त्वसं० पञ्जि० पृ० ३२३ पं० ९। १२–त्वं न बु–बा० भा० विना। १३–हो नागम्य–बा०। १४ पृ० १८८ पं० १४ तथा पं० ३३। १५ पृ० १८८ पं० ११ तथा ३०।

१६ "प्रतिबिम्बात्मकोऽपोहः पदादप्युपजायते। प्रतिभाख्यो झटित्येव पदार्थोऽप्ययमेव न." ॥

तत्त्वसं० का० १०२८ पृ० ३२३।

१७–त्मकं प्र–भा०। १८ वा स्वार्थो–मां०। "बाह्यार्थो"–तत्त्वसं० पञ्जि० पृ० ३२३ पं० १५। १९ "वाक्यार्थ इति"–तत्त्वसं० पञ्जि० पृ० ३२३ पं० १७। २०–ति प्रति–हा०। २१–पत्तिरभावतोपलम्भो बा०। २२ "नोपालम्भो युक्त"–तत्त्वसं० पञ्जि० ३२३ पं० १८। २३ पृ० १८८ प० १४ तथा प० ३३।

२४ "स्वरूपोत्पादमात्राद्धि नान्यमंशं बिभर्ति सा। बुद्ध्यन्तराद् व्यवच्छेदस्तेन बुद्धेः प्रतीयते" ॥

तत्त्वसं० का० १०२९ पृ० ३२३।

२५–दमात्रादन्यमावां सा बा० बा०। २६–न्यमशं आ० हा०।–न्यमात्रां वि०। २७ एव व्यव–बा०। २८–था स्वरूपं मां० मा०।–थान्येस्वरूपं आ० हा० वि०। २९ पृ० १८८ पं० १८ तथा प० ३७।

३० "यथैवाविद्यमानस्य न भेदः पारमार्थिक। अभेदोऽपि तथैवेति तेन(येन)पर्यायता भवेत्" ॥

तत्त्वसं० का० १०३० पृ० ३२३।

३१–रूपस्यापरस्परतो हा०।

३२ "अभेदो ह्येकरूपत्वं नीरूपेषु च तत् कुत। एकत्वेऽर्थस्य पर्याया आप्नुवन्ति च वाचका" ॥

तत्त्वसं० का० १०३१ पृ० ३२४।

पर्यायता[1] । स्यादेतत् यदि नाम नीरूपेष्वेकरूपत्वं भावो नास्ति तथापि काल्पनिकस्य[2] तस्य भावात् पर्यायतालक्षणं युक्तमेव[3] । नन्वेवं[4] पर्याया[5]ऽपर्यायव्यवस्था शब्दानां कथं युक्ता ? उक्तं च—

"रूपाभावेऽपि[6] चैकत्वं कल्पनानिर्मितं यथा ।
विभेदोऽपि तथैवेति कुतः पर्यायता ततः" ? ॥ [ तत्त्वसं० का० १०३२ ]
"भावतस्तु न पर्याया न[7] पर्यायश्च (नापर्यायाश्च) वाचकाः ।
न ह्येकं[8] वाच्यमेतेषा[9]मनेकं चेति वर्णितम्[10]" ॥ [ तत्त्वसं० का० १०३३ ] इति ।

यदि परमार्थतो भिन्नमभिन्नं वा किञ्चिद् वाच्यं[11] वस्तु शब्दानां स्यात् तदा पर्यायापर्यायता भवेत् यावता—'स्वलक्षणं जातिस्तद्योगो जातिमांस्तथा' इत्यादिना[12] वर्णितम्—यथैषां न किञ्चिद् वाच्यमस्तीति । पर्यायादि[13]व्यवस्था तु अन्तरेणापि सामान्यम् सामान्यादिशब्दत्वस्य व्यवस्थार्प[14]णात् । तस्य चेदं निबन्धनं[15] यद् बहूनामेकार्थक्रियाकारित्वम्-प्रकृत्या केचिद् भावा बहवोऽप्येकार्थक्रियाकारिणो भवन्ति; तेषामेकार्थक्रियासामर्थ्यप्रतिपादनाय व्यवहर्तृभिर्लाघवार्थमेकरूपाध्यारोपेणैका श्रुतिर्निवेश्यते, यथा[16]-बहुषु रूपादिषु मधूदकाद्याहरणलक्षणैकार्थक्रियासमर्थेषु 'घटः' इत्येका श्रुतिर्निवेश्यते । कथं पुनरेकेनानुगामिना विना बहुष्वेका श्रुतिर्नियोक्तुं शक्या[17] ? इति न वक्तव्यम्, इच्छामात्र[18]प्रतिबद्धत्वात् शब्दाना[19]मर्थप्रतिनियमस्य । तथाहि—चक्षु[20]-रूपाऽऽलोक-मनस्कारेषु रूपविज्ञानैकफलेषु यदि कश्चिद् विनाप्येकेनानुगामिना सामान्येनेच्छावशादेकां श्रुतिं निवेशयेत्[21] तत् किं तस्य कश्चित् प्रतिरोद्धा भवेत् ? न हि तेषु लोचनादिष्वेकं चक्षुर्विज्ञानजनकत्वं सामान्यमस्ति यतः सामान्य-समवाय[22]-विशेषा[23] अपि भवद्भिः चक्षुर्ज्ञानजनका अभ्युपगम्यन्ते, न च तेषु[24] सामान्यसमवायोऽस्ति निःसामान्यत्वात् सामान्यस्य, समवायस्य च द्वितीयसमवायाभावात् ।

न च[25] घटादिकार्यस्योदकाहरणादेस्तज्ज्ञानस्य च स्वलक्षणरूपत्वेन भिन्नत्वात् कथमेककार्यकारित्वम् ? इति वक्तव्यम्, यतो यद्यपि[26] स्वलक्षणभेदात् तत्कार्यं भिद्यते तथापि ज्ञानाख्यं तावत् कार्यमेकार्था[27]ध्यवसायिपरामर्शप्रत्ययहेतुत्वादेकम्, तज्ज्ञानहेतुत्वाच्चार्था[28] घटादयोऽभेदिन इत्युच्यन्ते[29] ।

---

१-पत्वं भवतो नास्ति वा० बा० । "भावतो नास्ति"-तत्त्वसं० पञ्जि० पृ० ३२४ पं० ९ । २-कस्य भावा-बा० ।-कस्य तस्य तावत् पर्याय-मां० । ३ एतदेव पर्यायतालक्षणं 'रूपाभावेऽपि' इत्यादिश्लोकेन प्रत्युक्तम् -प्र० पृ० पं० ३ । ४ 'नन्वेवम्' इत्यादिनाऽऽशङ्कितं तु 'भावतस्तु न' इत्यादिना श्लोकेन समाहितम्-प्र० पृ० पं० ५ । ५ पर्यायव्यव-बा० बा० आ० । ६-पि वैकत्वं भा० हा० । ७ न पर्यायस्य मां० वा० बा० विना । "नापर्यायाश्च"-तत्त्वसं० का० १०३३ पृ० ३२४ । ८ न ह्येवं वा-बा० । न ह्येक वा-मां० मा० । "न ह्येकं वाच्यम्"-तत्त्वसं० का० १०३३ पृ० ३२४ । ९-षां मनेकं चेति आ० ।-षां मते किञ्चिद्विवर्णि-वि० ।-षामनेकान्तवर्णिताम् बा० । १० श्लोकद्वयमेतत् शास्त्रवा० स्याद्वादक० पृ० ४०२ द्वि० पं० १२-१३ ।

११ वाच्यवस्तु शब्दानां वाच्यं स्यात् मा० । १२ पृ० १७४ पं० २३ तथा ४० ।

१३ "किन्त्वनेकोऽपि यथैककार्यकारी य ईक्ष्यते । तत्रैकधर्मारोपेण श्रुतिरेका निवेश्यते" ॥

तत्त्वसं० का० १०३४ पृ० ३२४ ।

१४-पनस्य चे-आ० हा० वि० ।-पणा तस्य चे-बा० वा० । "सामान्यशब्दत्वव्यवस्थाया इदं निबन्धनम्"-तत्त्वसं० पञ्जि० पृ० ३२४ पं० २३ । १५-न्धनं बहू-वा० बा० विना । १६-था चहुषु रू-बा० ।-था बाहुषु रू-हा० वि० ।-था बाहुरू-आ० । १७ शक्यते न वक्त-मां० मा० । शक्यते ति (इति) न वक्त-वा० बा० ।

१८ "लोचनादौ यथा रूपविज्ञानैकफले क्वचित् । कश्चिद् यदि श्रुतिं कुर्याद् विनैकेनानुगामिना" ॥

तत्त्वस० का० १०३५ पृ० ३२५ ।

१९ शब्दार्थानामर्थ-मां० । २० चक्षुरूपालोकनमस्कारे-भा० मा० विना । २१-शयेन्न किं आ० बा० वा० ।-शयेत्त किं मा० मां० । २२ समवायिविशे-आ० वि० । समवासिविशे-हा० । समायिवि-बा० बा० । २३-षा पि भा० । २४-षु असामा-भा० । २५ च घटादि-वा० बा० ।

२६ "घटादीनां च यत् कार्यं जलादेर्धारणादिकम् । यच्च तद्विषयं ज्ञानं भिन्नं यद्यपि तद् द्वयम्" ॥
"एकप्रत्यवमर्शस्य हेतुत्वादेकमुच्यते । ज्ञानं तथापि तद्धेतुभावादर्था अभेदिन" ॥

तत्त्वस० का० १०३६-१०३७ पृ० ३२५ ।

२७-र्थावसायपरा-मां० मा० ।-र्थाव्यवसायिपरा-बा० बा० । २८-च्चार्था घटाद्-मां० मा० । २९ -त्युच्यते बा० ।

न च योऽसो परामर्शप्रत्ययस्तस्यापि[1] स्वलक्षणरूपतया भिद्यमानत्वादेकत्वासिद्धेरपरापरैकाकारपरामर्शप्रत्ययकार्यानुसरणतोऽनवस्थाप्रसङ्गतो ने(नै)ककार्यतया क्वचिदेकश्रुतिनिवेशो बहुषु[2] सिद्धिमुपगच्छतीति वाच्यम्; यतो न[3] परामर्शप्रत्ययस्यैककार्यकारितयैकत्वमुच्यते, किं तर्हि? एकाध्यवसायितया। स्वयमेव परामर्शप्रत्ययानामेकत्वसिद्धेर्नानवस्थाद्वारेणैकश्रुतिनिवेशाभावः, अत[4] एकाकारपरामर्शहेतुत्वाद् ज्ञानाख्यं कार्यमेकम्[5]; तद्धेतुत्वाद्[6] घटादय एकत्वव्यपदेशभाजः। तेन विनापि वस्तुभूतं सामान्यं[7] सामान्यवचना[8] घटादयः सिद्धिमासादयन्ति। तथा, कश्चिदेकोऽपि[9][10] प्रकृत्यैव सामग्र्यन्तरान्तःपातवशादनेकार्थक्रियाकारी[11] भवति[12] व्यतिरेकेणापि वस्तुभूतसामान्यधर्मभेदम्[13], तत्रातत्कार्यपदार्थभेदभूयस्त्वात्[14] अनेकश्रुतिसमावेशः अनेकधर्मसमारोपात्, यथा[15]- स्वदेशे परस्योत्पत्तिप्रतिबन्धकारित्वाद् रूपं सप्रतिघम्[16]-सह[17] निदर्शनेन चक्षुर्ज्ञानजनकत्वेन वर्तत इति[18]-सनिदर्शनं[19] च तदेवोच्यते, यथा वा शब्द एकोऽपि प्रयत्नानन्तरज्ञानफलतया 'प्रयत्नानन्तरः' इत्युच्यते, श्रोत्रज्ञानफलत्वाच्च[20] श्रावणः-श्रुतिः[21] श्रवणं श्रोत्र (त्र) ज्ञानम् तत्प्रतिभासतया[22] तत्र भवः श्रावणः, यद्वा श्रवणेन गृह्यत इति श्रावणः-एवमतत्कार्यभेदेनैकस्मिन्नप्यनेका[23] श्रुतिर्निवेश्यमानाऽविरुद्धा। अतत्कारणभेदेनापि क्वचित् तन्निवेशः, यथा[24]-भ्रामरं मधु क्षुद्रादिकृतमधुनो व्यावृत्त्या। तथा[25] तत्कार्यकारणपदार्थव्यवच्छेदमात्रप्रतिपादनेच्छया अन्तरेणापि सामान्यं श्रुतेर्भेदेन निवेशनं सम्भवति-

"अश्रावणं[26] यथा रूपं विद्युद्वाऽयत्नजा यथा" ॥ [ तत्त्वसं० का० १०४२ ]

"इत्यादिना प्रभेदेन विभिन्नार्थनिबन्धनाः[27]।

---

१-पि विलक्षणरूप-वा०। २-हुष(ष्व)मितिसिद्धिमु-वा० वा०।-हुपु शुद्धिमु-भा० मा०। ३ "न हि प्रत्ययमर्शप्रत्ययस्यैककार्यतयैकत्वमुच्यते, किं तर्हि? एकार्थाध्यवसायितया। तेन नानवस्था भविष्यति"-तत्त्वस० पञ्जि० पृ० ३२५ पं० २४। ४ अत एव एकापरा-वा० वा०। ५ कार्यमेत्येकम् वा०। ६-तु भावात् घटा-भा० मा०। ७ सामान्यं वचनाद् घटा-वा० वा०। सामान्यं चना घटा-भा०। सामान्यं चन घटा-का०। सामान्यं सामान्यवता घटा-हा०। वि० प्रतौ तु हा० समानोऽपि पाठ 'सामान्यं सामान्यवन्तो घटा'-इति पश्चात् संशोधितो दृश्यते।

८ "तत्र सामान्यवचना उक्ता. शब्दा घटादय । विजातीयव्यवच्छिन्नप्रतिबिम्बैकहेतव" ॥

तत्त्वस० का० १०३८ पृ० ३२६।

९ "तथाऽनेकार्थकारित्वादेको नैक इवोच्यते। अतत्कार्यपरावृत्तिबाहुल्यपरिकल्पित" ॥

तत्त्वस० का० १०३९ पृ० ३२६।

१०-कोऽपो प्रकृत्यैव भा० हा० वि०।-कोऽपोहः प्रकृत्यैव का०। ११-रान्तपात-भा०। रातः परवशाद्देने-वा०। १२ "भवति। तत्रान्तरेणापि वस्तुभूतसामान्यादिधर्मभेदम्"-तत्त्वस० पञ्जि० पृ० ३२६ पं० ११। १३-दाम् वा०। अत्र "गौणात् समयानिकषाहाधिगन्तरान्तरेणातियेनतेनैर्द्वितीया"-इति है० अ० २ पा० २ सू० ३३ गतेन बहुवचनेन 'व्यतिरेकेण' इत्यस्य योगेऽपि द्वितीया समावेया। १४ तत्रा न कार्यपदार्थभेदभूतत्वा-वा० वा०। तत्र तत्कार्यपदार्थभेदभूयत्वा-भा० का०। तत्र तत्कार्यपदार्थभेदभूयस्त्वा-वि०। तत्र तत्कार्यभेदभूयस्त्वा-हा०।

१५ "यथा सप्रतिघं रूपं सनिदर्शनमित्यपि। प्रयत्नानन्तरज्ञातो यथा वा श्रावणो ध्वनिः" ॥

तत्त्वस० का० १०४० पृ० ३२६।

१६-प्रतिपं भा० हा० वि०। १७ सह दर्शा-वा० हा० वि०। १८-ति संनिदर्शनं तदे-भा० मां०। १९-नं तदे-भा० हा० वि०। २० श्रोतृज्ञा-वा० वा० विना। २१ श्रुतिः श्रोतृ-भा० मा०। २२ तत्र प्रति-भा० मा०। २३-न्नप्येका मा०।

२४ "अतत्कारणभेदेन क्वचिच्छब्दो निवेश्यते। प्रयत्नोत्थो यथा शब्दो भ्रामर वा यथा मधु" ॥

तत्त्वसं० का० १०४१ पृ० ३२६।

२५ तथाऽतत्का-वा० वा० विना। "इदानीं तत्कार्यकारणपदार्थव्यवच्छेदमात्रप्रतिपादनेच्छया"-तत्त्वस० पञ्जि० पृ० ३२६ पं० २७। २६ अस्य पूर्वार्धं तु-"तत्कार्य-हेतुविश्लेषात् क्वचिच्छ्रुतिरिहोच्यते"-तत्त्वसं० पृ० ३२७ पं० २। २७-ना वा० वा० विना।

# चतुर्थगाथाव्याख्या ।

## [ द्रव्यास्तिकैकप्रकृतिकयोः संग्रह-व्यवहारयोः शुद्धाशुद्धतया भेदनिरूपणम् ]

'दव्वट्ठिओ य पज्जवणओ य' इत्यादिपद्यार्द्धैकदेशस्य विवरणाय आह सूरिः—

दव्वट्ठियनयपयडी सुद्धा संगहपरूवणाविसओ ।
पडिरूवे पुण वयणत्थनिच्छओ तस्स ववहारो ॥ ४ ॥

इति गाथासूत्रम् ।

अत्र च संग्रहनयप्रत्ययः शुद्धो द्रव्यास्तिकः व्यवहारनयप्रत्ययस्त्वशुद्ध इति तात्पर्यार्थः ।

अवयवार्थस्तु द्रव्यास्तिकनयस्य व्यावर्णितस्वरूपस्य प्रकृतिः स्वभावः शुद्धा इत्यसङ्कीर्णा विशेषासंस्पर्शवती संग्रहस्य अभेदग्राहिनयस्य प्ररूपणा—प्ररूप्यतेऽनयेति कृत्वा—उपवर्णना पदसंहतिस्तस्या विषयोऽभिधेयः । विषयापकारेण विषयिणो वृत्तस्य विषयव्यवस्थापकत्वादुपचारेण विषयेणा(ण) विषयिप्रकथनमेतत् अन्यथा कः प्रस्तावः शुद्धद्रव्यास्तिकेऽभिधातुं प्रक्रान्ते संग्रहप्ररूपणाविषयाभिधानस्य ?

### [ संग्रहस्य सत्तामात्रविषयकत्वसाधनम् ]

सुबन्तस्य तिङन्तस्या(स्य) वा पदस्य वाक्यस्य वा प्ररूपणास्वभावस्य विषयः संग्रहाभिप्रायेण भाव एव । तथाहि—जाति-द्रव्य-गुण-क्रियापरभाषितरूपेण स्वार्थ-द्रव्य-लिङ्ग-कर्मादिप्रकारेण वा सुबन्तस्य योऽर्थः(र्थः स) भावाद् व्यतिरिक्तो वा भवेत्, अव्यतिरिक्तो वा ? यदि व्यतिरिक्तस्तदा निरू(रु)पाख्यत्वादत्यन्ताभाववत् न द्रव्यादिरूप इति कथं सुबन्तवाच्यः ? अव्यतिरिक्तश्चेत् कथं न भावमात्रता सुबन्तार्थस्य ? तिङन्तार्थस्यापि क्रिया-काल-कारक-पुरुष-उपग्रह-वचनादिरूपेण परिभाष्यमाणस्य सत्तारूपतैव । तथाहि-'पचति' इत्यत्र क्रिया विक्लित्तिलक्षणा, काल आरम्भप्रवृत्ति(प्रभृति)रवर्ग(रपवर्ग)पर्यन्तो वर्तमानस्वरूपः, कारक कर्ता, पुरुषः परमात्मकः, उपग्रहः परार्थता, वचनमेकत्वम् यद्यपि प्रतिपत्तिविषयस्तथापि सत्त्वमेवैतत् यतः क्रिया असती चेत् कारकैर्न साध्येत खपुष्पादिवत्, सती चेत अस्तित्वमेव,सा कारकैश्चाभिव्यज्यत इति । एवं कालादयोऽप्यसन्तश्चेद् न शशशृङ्गाद् भिद्येरन्, सदात्मकाश्चेत् कथं न अस्तित्वादभिन्ना इति सत्त्वेव तिङन्तस्यार्थः । 'घटोऽस्ति' इति वाक्यार्थ(र्थे) यद् वाक्यं प्रयुज्यते 'घटः सन्' इति तत्र भावाभिधायिता पदद्वयस्यापि । तथाहि-'घटः' इति विशेषणम् 'सन्' इति विशेष्यम्, अत्र द्वयेनापि चाभावविपरीतेन भाव्यम् न ह्यन्यथा तद् विशेषणम् नापि तद्-विशेष्यं स्यात् निरू(रु)पाख्यत्वाद् अत्यन्ताभाववत् । यदि पुनरभावविपरीतं तद् इष्यते, विशेषण-विशेष्ययोः कथं न भावरूपता ? तेन यथैव पटस्य (घटस्य) भावो घटत्वं तदेव घटः, यश्च सतो भावः सत्त्वं तदेव 'सन्' इति सर्वत्र संग्रहाभिप्रायतः प्ररूपणाविषयो भाव एव । उक्तं चैतत् समयसद्भावमभिधावता अन्येनापि—

"अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवताशब्दैः समम्रा(मा)हुर्गवादिषु" ॥ [ वाक्यप० द्वि० का० श्लो० १२१ ]

---

१ पृ० २७१ प० ८ । २-रूवेण पु-भा० । शोधनाय व्यापार्यमाणासु सर्वासु टीकाप्रतिषु 'पडिरूवे' इत्येव प्रतीकं टीकाकृता निरदेशि, व्याख्यायि च 'प्रतिरूपम्' इति । ३-यां कारणा-वा० बा० । ४-ण विषयणा विषंभा० ।-ण विषयेणो विष-वि० ।-ण विषयिप्र० भा० मां० ।-ण विषयिप्रथन-वा० बा० । ५-हरूप-वा० बा० विना । ६-स्याव्याप-वा० बा० ।-स्यात्वाप्ररू-भा० मां० ।-स्याचाप-वि० । ७-योर्थः स्वभावा स्वभावाद् व्यति-वा० बा० । ८-भावात्तद्र-वा० बा० । ९-मात्रस्य वा० बा० । १०-वृत्तिपपवर्ग-भा० । वृत्तिपवर्ग-भा० मां० हा० वि० । ११-रभवात्म-वा० बा० । १२-ति अस्यार्थे यद् वा० बा० विना । १३-चवैपरीत्येन वा० बा० । १४-भावतया य-वा० बा० । १५ तद्विशेष्यते भा० । १६-व कटस्य वा० बा० । १७ "यथाहुः" इति निर्दिश्य श्लोकोऽयमुद्धृतः तत्त्ववार्तिके पृ० २५१ पं० १२ । तत्र च "अपूर्वदेवतास्वर्गैः सममाहुः" इति पाठः ।